# SIDDHANTA NIDANAM.

**A Text-Book of the Etiology, Pathology & Symptomatology of Diseases in Sanskrit**

FOR

AYURVEDIC STUDENTS & PRACTITIONERS.

BY

MAHAMAHOPADHYAYA

GANANATH SEN, M. A., L. M. S.

VIDYANIDHI, SARASWATI, KAVIRAJ.

AUTHOR OF "PRATYAKSHA SHARIRAM"

(A Text-book of Human Anatomy in Sanskrit)

## PART I.

CALCUTTA.

1922.

# सिद्धान्तनिदानम्



महामहोपाध्याय-

कविराज श्रीगणनाथ सेन-

विद्यानिधि-सरस्वती, एम्-ए, एल्-एम्-एस्

इत्याख्येन विरचितम् ।

तत्कृतया

"तत्त्वदर्शिनी"-संज्ञया

विवृत्या सहितम् ।



( १म खण्डम् )



९४नं ग्रे ष्ट्रीट्, कलिकाताख्य भवनात्

कविराज श्रीचारुचन्द्र विशारदेन

प्रकाशितम् ।



खृं—१९२२

# PREFACE.

The object of the present work is to present in easy and up-to-date manner the Etiology, Pathology and Symptomatology of Diseases from the standpoint of Ayurvedic Medicine. Much doubt and discrepancy have arisen in the understanding of *Nidan* (the collective Ayurvedic name for these subjects) owing to the average teacher and student not clearly grasping the true spirit and import of the great Ayurvedic Samhitas of old, which—by the way—are properly studied only by a few scholars. Mine is an attempt to clear up the mist and to pave the way for a better understanding of the subject.

The old work of Madhavakar of Bengal, known commonly as *Madhava Nidanam*, has held the field for several centuries. Though a valuable compilation by itself, it is, in my humble opinion, not the most suitable work for the beginner as it is intended and employed to be. It often lacks the perspicuity of the fine style of the Rishis and fails to grasp the necessity of the student's preliminary grounding in Anatomy and Physiology and in the great Theory of *Tridosha* on which all such works are based. This theory, I may add, is perfectly compatible with the findings of modern Physiology without the necessity of distorting ancient Ayurvedic texts, though the average Ayurvedic teacher on one side and his foreign rival on the other have often failed to do justice to it. Besides, centuries have rolled by since the work of Madhava was written and the symptoms and manner of incidence of certain diseases have changed greatly. Even novel diseases seem to have appeared. Ingenious but futile attempts have often been made to explain them away by Ayurvedic practitioners

who seem to forget that even Charaks and Sushruta had clearly grasped the possibility of new or "undescribed" diseases. All this, I am afraid, has given rise to sophistry and lack of that liberal and laborious spirit of research which the sage writers of Ayurveda have always advocated.

Bacteriology too, as a subject closely allied to Pathology, has been much neglected, even though a clear recognition of the share of microbes and animal parasites in the causation of certain diseases occurs in all the ancient Samhitas of Ayurveda. In my opinion, we can no longer afford to ignore this important subject and the advances made by modern workers.

Keeping all these facts in view, I have endeavoured to write this work of *Nidanam* on modern lines. The text is mainly that of the old Samhitas, though I have, where necessary, made ample additions in my own language to bring the subject fairly up to-date. For the selection and arrangement of the text and the new Commentary, I am alone responsible. In the latter, I have endeavoured to fill in the gaps and to correct erroneous impressions which seem to have gained currency. I have also attempted to explain and establish what might appear to be innovotions to conservative scholars, by quoting plenty of evidence from ancient texts in support of my views. How far I have been successful in my efforts can be judged only by those who are capable of judging such a highly technial work impartially. But I do venture to hope that my work will be found an usefull companion to the student and teacher alike.

It may not be out of place here to add why I have written this work in Sanskrit. It will readily appear to all thoughtful men that Sanskrit is yet the classical language of Ayurveda and is the only medium through which all Ayurvedic practitioners of India can be approached. Perhaps, it is not too much to hope that translations of my work in the different vernaculars would be readily forthcoming, once it is accepted widely, just as has luckily occured with my Sanskrit work on Human Anatony.

I crave the indulgence of my learned critics and readers for the errors which may have crept into my work. I would be much obliged to them for pointing these out to me for the improvement of future editions, should I be fortunate enough to see them through.

In conclusion, a word of apology is necessary for bringing this work out in parts. I need only add that I am a slow writer, depending upon a slower press for the publication. I hope however to complete this work as soon as practicable, trusting meanwhile that even this first part would of be some use to those for whom it is intended.

*G. S.*

# ग्रन्थकर्त्तुर्निवेदनम् ।

आयुर्वेदाध्यायिभिश्छात्रैः प्रथममेव निदानमध्येयमितीयं परम्परा सम्प्रति सर्वत्र भारते प्रचरतितराम् । परम् अविदितवातपित्तकफतत्त्वा अनाकलित-शारीरपरिचयाश्च शिष्या निदानमधीयाना बहुधा प्रमाद्यन्ति, व्याकुलीकुर्वन्ति च परमर्षीणामभिप्रायमिति सुविदितं विदितवेदितव्यानाम् । न हि सूत्रस्थाने दोष-दूष्यादिविवरणमप्रतिपाद्यैव निदानस्थानमुपदिदिशुः प्राञ्चः । तस्मान्निदाना-ध्यायिभिरादौ शारीरविज्ञानभित्तिकं दोषदूष्यादिविवरणमवश्यमधिगन्तव्यमिति कस्तावदत्र चक्षुषानुदासीत ?

किञ्च, कालान्तरपरिणामादिनानाकारणवशादिदानीं प्रादुर्भूताः केचन नवीना रोगाः, विपरिणतलक्षणाश्च केचन प्राचीनाः, विलुप्ताश्चापरे शास्त्रोक्ताः—इत्याकलय्य साम्प्रतिकीं प्रवृत्तिमुद्दिश्य यथादृष्टमुपदेष्टव्यानि रोगाणां लक्षणानि । न हि तानि यथावदुपलभ्यन्ते प्राचीनसंग्रहेभ्यः ।

अथापि संक्रामकरोगाणां विवरणे योऽसौ बहुप्रमाणसिद्धो जीवाणुकारणवादः परमर्षीणां सुसम्मतोऽप्यधुना वैद्यैः विस्मृतप्रायः, सोऽपि सत्यनिर्द्धारणार्थं संक्र-मणवारणार्थं चिकित्साविशेषाभ्युपगमार्थञ्च पुनरपि वैद्यैरवश्यं प्रतिपत्तव्य—इत्यपि सुवेदं सूक्ष्मदृशाम् । दुर्व्याख्यात दुरधीतशास्त्रार्थविषमूर्च्छिता च वैद्यकसरस्वती सम्प्रति परमर्षिवचनामृतप्रसादपरिहीनेव लक्ष्यते । साऽस्माभिः शुश्रूषापरैः पुनः स्वस्थतां प्रापणीया ।

तदिदं प्रयोजनजातं विमृशता मया स्वल्पमतिनाऽपि यथाज्ञानं श्राम्यता सिद्धान्तनिदानाख्योऽयं ग्रन्थो निरमायि । भूम्ना चात्रोपन्यस्तानि प्राचामेव वचनानि, सिद्धान्तनिर्णयार्थमभिनवतत्त्वसंग्रहार्थं स्पष्टतरार्थप्रतिपादनार्थञ्च स्वरचितान्यपि कानिचित् । मूलग्रन्थार्थं स्फुटीकर्त्तुं विवृतिश्चात्र मया स्वयमेव व्यधायि । तर्ककर्कशाश्च विचारा यथाशक्ति परिहृताः शिष्यबोधसौकर्य्याय ।

अथेदानीं मभ्यर्थये—निर्मत्सरैर्महानुभावैः प्राणाचार्य्यैरध्यापितोऽयं ग्रन्थो वैद्यकाध्यायिनामुपकाराय सम्पद्यताम्, तथाऽध्यापिताश्चाऽकुण्ठबुद्धयः प्रवर्त्तन्तां भिषजः कर्म्मसु इति ।

इयञ्चापरा प्रार्थना विद्वन्मुख्येभ्यः—

नवीनसरणौ प्रवृत्तस्य स्वल्पमतेर्मे प्रमादाः सुलभा इति सकरुणमुपेक्ष्य दोषान् सफलतां नेयो मे श्रमः, प्रदर्शनीयाश्च अपुरोभागितया मे त्रुटयः । किञ्च,—

मुद्राकर-कराघात-खिन्ना चेन्मम भारती ।
कृपाकराम्बु जामर्शैः सन्तः संजीवयन्तु ताम् ॥

इति—

विद्वज्जनानुचरस्य

**श्रीगणनाथ सेन कविराजस्य**

# सिद्धान्तनिदान-

## प्रथमखण्डस्य सूची।

---

॥ श्रीं नम आयुर्व्वेदाचार्य्येभ्यः ॥

# सिद्धान्त-निदानम् ।

जयन्त्यपूर्वाः श्रीविष्णुपादाम्बुजरजःकणाः ।
मोहान्धतमसाच्छन्नजनदृष्टिप्रसादनाः ॥ १ ॥

स्मरामि जगदम्बिकाचरणचारुपद्मद्वयं
परिस्फुरदसीमके भुवनकारणे वारिणि ।
तदीयनखकेशरोल्लसदमन्दकान्तद्युति-
र्मदीयहृदयाम्बरे दिशतु चन्द्रिकाशुभ्रताम् ॥
निदाने स्वच्छसिद्धान्तबोधिनी बुधतोषिणी ।
स्वकृतौ क्रियतेऽस्माभिर्विवृतिस्तत्त्वदर्शिनी ॥
मूलेऽतिविस्तरभियाऽनुक्तं ब्रूमः सविस्तरम् ।
अर्थान् प्रविशदीकुर्म्मो निरस्यामश्च संशयान् ॥
न तर्ककर्कशं व्यर्थमारटामः कटूत्कटम् ।
उपयोगिनि तत्त्वे तु विस्तरं साधु मन्महे ॥
क्वाऽपारमायुषः शास्त्रं क्व संकीर्णा मतिश्च नः ।
तथापि गुरुकारुण्यं स्थिरालम्बं श्रिता वयम् ॥

इह खल्वायुर्व्वेदो नाम निखिलरुजार्त्तजनपरित्राणपुण्यव्रतं शास्त्रं यद्ब्रह्मादौ भगवान् लोकपितामहो निर्म्ममे, ब्रह्मणः प्रजापतिरधिजग्राह, प्रजापतेरश्विनाव-श्विभ्यामिन्द्रस्ततो धन्वन्तरिभरद्वाजौ, ताभ्याञ्चात्रेयाग्निवेशसुश्रुतप्रभृतयः संहिताकृतः पुराणाः—सोऽयमायुषः पुण्यतमो वेदो यं हेतुलिङ्गौषधज्ञानाख्य-स्कन्धत्रयविभक्तमनन्तपारमामनन्ति स्म त्रिकालदर्शिनो महर्षयोऽनन्तत्वात्त्रै-कालिकनिखिलविकार-हेतु-लिङ्गौषधानाम्, उपदिदिशुश्च—"न चैव ह्यस्ति सुत-रामायुर्व्वेदस्य पारम्, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेत् । कृत्स्नो हि लोको बुद्धिमतामाचार्य्यः शत्रुश्चाबुद्धिमतामतश्चाभिसमीक्ष्य बुद्धिमताऽमित्रस्यापि

**आयुर्वेदमहाम्भोधिपारोत्तीर्णधियं गुरुम्।**
**विद्याकल्पद्रुमं तातं विश्वनाथं नमाम्यहम्॥ २॥**

धन्यं यशस्यमायुष्यं पौष्टिकं लौकिकमभ्युपदिशतो वचः श्रोतव्यमनुविधातव्य ञ्चेति" (च० वि० ८ अ०)।

अथ गच्छति कालेऽस्माकमधन्यतया विलुप्तप्रायासु चरक-दृढ़बल-नागार्ज्जुनादिप्रतिसंस्कृत-भग्नावशेषासु चाग्निवेशसुश्रुताद्यनेकमहर्षिसंहितासु, नातिपुष्कलज्ञाननानानिबन्धृजनजल्पकल्पनाजलदाच्छन्नायाञ्चार्षज्ञानप्रभायां प्रादुर्बभूवुः परःशतानि तन्त्राणि यान्यनार्षाण्यपि स्वल्पतरविषयाण्यपि बहुमन्वानाः कूपमण्डूकवदियत्तया परिच्छिन्नमपारमायुर्व्वेदविषयमाचक्षतेऽधुनातना बहवः। तदिदानीमित्थं गते प्रतिसंस्कारापूरणाभ्यां संवर्द्धनीये वैद्यकनये हेतुलिङ्गाख्यं तस्यादिमं स्कन्धद्वयं रुग्विनिश्चयसाधनमधिकृत्य लभ्यमानचरकसुश्रुतसंहितादिभ्यः प्रामाणिकान्यार्षवचांसि संगृह्य, संकलय्य च तदर्थान्, संयोज्य चाभिनवैः प्रत्यक्षसिद्धैस्तत्त्वैरमुं सिद्धान्तग्रन्थं निर्म्मिमाणः प्राच्यप्रतीच्यचिकित्सातत्त्वाधिगमकृतबहुश्रमो ग्रन्थकृदखिलविघ्नोपशमकामो भगवतः श्रीविष्णोश्चरणस्मरणपूर्वमुपक्रमते— **जयन्तीत्यादि।** अपूर्वा इतरविलक्षणा अचिन्त्यमहिमानः श्रीविष्णोर्भगवतो वासुदेवस्य पादाम्बुजयोः रजःकणाः जयन्ति सर्वोत्कर्षेण वर्त्तन्ताम्। अथ कथमपूर्वाः? यतो मोहान्धतमसाच्छन्नजनदृष्टिप्रसादनाः। मोहोऽज्ञानमेवान्धतमसमन्धङ्करणं तमस्तेनाच्छन्नानां मोहान्धानामिति यावत्। जनानां दृष्टिप्रसादना नेत्रप्रसादकराः। इतरे तु रजःकणाः स्पर्शमात्रेण प्रसन्नामपि दृष्टिं कलुषीकुर्य्युरिमे तु नितरामन्धस्यापि दृष्टिं प्रसादयेयुरित्येषामपूर्व्वत्वम्। अत्रेदं ध्वन्यते—ये तावदाधुनिकनिबन्धृजनग्रन्थमात्रालोकनेनार्षाभिप्रायाऽनाकलनेन वाऽऽच्छन्नदृष्टयो नालं द्रष्टुमायुर्व्वेदस्योदारानन्तविषयतां—ननु तेषामपि दृष्टिरुन्मीलतां श्रीमन्नारायणचरणरेणुव्यतिकरेणेति॥ १॥

अथ ग्रन्थकृदायुर्व्वेदाचार्य्यं स्वगुरुं स्वर्गतं पितरं प्रसिद्धयशसं विद्याकल्पद्रुमेत्यन्वर्थनामानं विश्वनाथभिषजं नमस्यति स्वबुद्धिवैशद्यार्थमवश्यस्मरणीयत्वाद् गुरुचरणानाम्—**आयुर्व्वेदेति।** आयुर्व्वेद एव महाम्भोधिर्दुरवगाहः समुद्रस्तस्य पारोत्तीर्णा पारङ्गता धीर्य्यस्य तं तादृशं सर्वायुर्वेदस्वतन्त्रं बहुविद्यानिष्णातत्वाद् वाराणसेयपण्डितैर्विद्याकल्पद्रुमनाम्ना प्रख्यापितमित्यादि स्पष्टम्। तादृशगुरोरधीतायुर्व्वेदो न खलु सुधियामनादरणीयवचनोऽस्मीति ध्वनितोऽर्थः॥ २॥

---

१ नागार्ज्जुनः सुश्रुतप्रतिसंस्कर्त्ता न वेति संशयितमेव (दृश्यतामस्मदीय "प्रत्यक्षशारीर"—ग्रन्थस्य उपोद्घातः)। तथापीह प्रचलितमतानुसारेण नागार्ज्जुननामग्रहणम।

नानातन्त्रप्रबुद्धानां भिषजां नाल्पमेधसाम्।
ज्ञानस्य सारमादाय रुग्विनिश्चयसाधने।
आर्षं वचः समाहृत्य नार्षं निर्हृत्य च भ्रमम्।
सत्यञ्चैकं समाहृत्य सिद्धान्तः संविधीयते॥ ३॥

अथ "अभिधेयफलज्ञानविरहस्तिमितोद्यमाः। श्रोतुमल्पमपि ग्रन्थं नाद्रियन्ते हि साधवः"—इति स्मरन् स्वेष्टदेवतागुरुनमस्कारानन्तरं, प्रयोजनाभिधेयसम्बन्धान् व्याचष्टे—**नानातन्त्रे**ति श्लोकद्वयेन। रुजो रोगास्तेषां विनिश्चयः, "अमुं प्रदेशमाश्रित्येत्यादि" वक्ष्यमाणाशेषविशेषप्रकारकं ज्ञानं, तस्य साधने हेतुलिङ्गज्ञानाख्ये आयुर्व्वेदस्यादिमे स्कन्धद्वये। सिद्धान्तो नाम बहुपरीक्षासंसिद्धः सहेतुको निर्णयः। तथाहि चरकः—"सिद्धान्तो नाम यः परीक्षकैर्बहुविधं परीक्षितो हेतुभिः साधयित्वा स्थाप्यते निर्णयः" इति (च० वि० ८)। संविधीयते सम्यक् प्रतिपाद्यते मयेति शेषः। एतेन रोगाणां हेतुलिङ्गज्ञानं प्रयोजनं, सिद्धान्तोऽभिधेयस्तेन चास्य ग्रन्थस्य प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्ध इत्यभिहितं भवति। सिद्धान्त इति कथनेन ग्रन्थस्य सिद्धान्तनिदानमिति नामख्यापनमुपादेयताव्यञ्जनञ्च स्फुटीभवतः। नन्वनन्तपारस्तावदयमायुर्व्वेदोऽपरिसंख्येयाश्च रोगास्तत् कथमेषां विनिश्चये स्वल्पायुषा स्वल्पज्ञानेनैकेन भवता शक्यं सिद्धान्तसंविधानमित्याह—**नानातन्त्रे**त्यादि। नानातन्त्राणि प्राच्य-प्रतीच्य-पुराण-नवीनाखिलप्रामाणिकजनप्रणीतचिकित्साशास्त्राणि तेषु प्रबुद्धानां सम्यक् परिनिष्ठितमतीनां नाल्पमेधसामत एव निखिलार्थग्रहण-धारणसमर्थानां भिषजां चिकित्सकानां ज्ञानस्य निश्चयात्मकबोधस्य सारमूहापोहादिप्रपञ्चविरहितं निष्कर्षमादाय गृहीत्वा। तथाच शक्यमस्मादृशैरपि अस्मद्भिर्यथासम्भवं सिद्धान्तसंविधानमिति भावः। नन्वनृषिरश्रद्धेयवचनो भवान्, सत्सु नानामुनीनां वचनैर्निबद्धेषु माधवकरादिकृतेषु निबन्धेषु निष्फलारम्भश्चेत्याशंक्याह—**आर्षमित्यादि**। आर्षमृषिप्रणीतं वचः समाहृत्य लभ्यमानचरक-दृढबल-नागार्ज्जुनादिप्रतिसंस्कृतचरक-सुश्रुतादिग्रन्थेभ्यो यथालाभमवितथतत्त्वाभिधानपरं सङ्कलय्य। किञ्चानार्षमनृषिभिः कृतं लोकैरविवेकिभिरार्षत्वेन गृहीतं भ्रममग्रे बहुधा दर्शयिष्यमाणं निर्हृत्य निष्काश्य, असत्यमिति दूरात् परिहृत्य। न हि नीरजस्तमसस्ते महर्षयोऽसत्यं ब्रूयुरेतानि तावदार्षवचसां मध्ये निबन्धृजनभ्रान्तवचांस्येवासत्यप्रतिपादकानीति तान्यवश्यमनार्षाणि परित्याज्यानि चेति भावः। एवञ्च सत्यप्रियाणां महर्षीणां चरणानुसरणेन एकं सत्यं प्रमाण-

# अथ दोषदूष्यव्याधिनिर्णयः ।

**"वायुः पित्तं कफश्चेति शारीरो दोषसंग्रहः ।**
**मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥ ४ ॥"**

---

सिद्धं समादृत्य बहुमानेन गृहीत्वा । वक्तृविशेषनिःस्पृहगुणग्रहतया स्वग्रन्थे निवेश्येति भावः । नन्वाप्ताः किल परमर्षयः श्रद्धेयवचनाः, तदुक्तं—"येषां त्रिकालममलं ज्ञानमव्याहतं सदा । आप्ताः शिष्टा विबुद्धास्ते तेषां ज्ञानमसंशयम्" इति; अनाप्तास्त्वन्ये न श्रद्धेयवचनाः—इति चेत्, दृश्यतां चरकानुशासनम्—"आप्तागमस्तावद्वेदो यश्चान्योऽपि कश्चिद्वेदार्थादविपरीतः परीक्षकैः प्रणीतः शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः स चाप्तागमः ।" इति ( च० सू० ११ अ० ) । तथाच—यथाऽऽभमृषिप्रणीतैरवितथार्थैरनृषिप्रणीतैश्च वचनैः सत्यनिर्द्धारणपरोऽयं सिद्धान्तग्रन्थः प्रेक्षावत्प्रियो भवितुमर्हति, प्रत्यक्षादिप्रमाणसुपरीक्षितसत्यादरणस्य नियतश्रेयस्करत्वात् ॥ ३ ॥

अथ शास्त्रारम्भे प्रतिपाद्यव्याधिविज्ञानमूलभूतं दोषदूष्यादिविवेकमुपक्रमते चरकीयश्लोकेन ( च० सू० १अ० )—**वायुरिति** । दूषयन्ति शरीरं मनश्चेति दोषाः । तेषां संग्रहः समुच्चयः, वक्ष्यमाणभेदप्रपञ्चसंक्षेपो वा, उद्दिष्टः कथितः परमर्षिभिः पूर्वैः । स च शारीरः शरीरसम्बन्धी दोषसंग्रहो—वायुः पित्तं कफश्चेति त्रितयात्मकः । मानसः पुनरसौ रजश्च तमश्चैवेति द्वितयात्मकः । एवकारेण सत्त्वं व्यवच्छिनत्ति, सत्त्वं ह्यविकारि गुण एव न दोषसंज्ञामर्हतीति । अयमभिसन्धिः । द्विविधाः खल्वधिष्ठानभेदतो रोगाः वक्ष्यमाणस्वरूपाः—शारीरा मानसाश्च, तत्र शारीराणां रोगाणामाभ्यन्तरहेतुभूता विकृता वातादयस्ते हि तथाभूता विकुर्वन्ति दूष्याणि रसरक्तादीनि, मानसानान्तु रोगाणामाभ्यन्तरहेतुभूते प्रवृद्धे रजस्तमसी; ताभ्यां हि तथाभूताभ्यां कामक्रोधमोहोन्मादादिपरीतं भवति मन इति ।

अत्रेदमवधेयम् । वातादीनां विकृतानामेव दोषसंज्ञा मुख्या, अविकृतानान्तु तेषां धातुसंज्ञा, क्वचिद् गौणी वा दोषसंज्ञा स्वरूपयोग्यत्वात् । रजस्तमसी तु प्रवृद्धे दोषसंज्ञे, स्वभावस्थे पुनस्ते अपि प्रवृत्तिनियमार्थे गुणसंज्ञे प्राहुः । तथाच साङ्ख्याः—"सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः । गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ प्रीत्यप्रीतिविषादात्मकाः प्रकाश-प्रवृत्ति-नियमार्थाः । अन्योन्याभिभवाश्रय-जनन-मिथुनवृत्तयश्च गुणाः ॥" इति (साङ्ख्यकारिकायाम्) । सन्ति चात्र विशेषप्रतिपादकानि भगवद्वचनानि—"सत्वं रजस्तम इति गुणाः

**"नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः ।**
**विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः ॥ ५ ॥"**

---

प्रकृतिसम्भवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ तत्र सत्वं निर्म्मलत्वात् प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् । तन्निबध्नाति कौन्तेय कर्म्मसङ्गेन देहिनम् ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत । ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ रजस्तमश्चाभिभूय सत्त्वं भवति भारत । रजःसत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ सर्व्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते । ज्ञानं यदा तदा विद्याद् विवृद्धं सत्वमित्युत ॥ लोभः प्रवृत्तिरारम्भः कर्म्मणामशमः स्पृहा । रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च । तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥" ( गीता १४श अ० ) । विस्तरस्त्वेषामाकरे द्रष्टव्यः प्रष्टव्यश्च गुरुचरणेभ्यः ॥ ४ ॥

अथ शारीरमानसरोगेषु शारीराणामेव रोगाणां प्रधानत्वात् तन्मूलहेतुभूत दोषविवरणं सम्यक् प्रतिपादयितुं प्रपञ्चयति पुनश्चरकीयश्लोकेन— **नित्या इति ।** एतेषु पूर्व्वोक्तेषु शारीरमानसदोषेषु मध्ये प्राणभृतां प्राणिनामाकीटमनुष्याणां देहे त्रयो वातपित्तकफा नित्या नियतावस्थायिनो यावच्छरीरावस्थानाः, विकृताः प्रकृतिस्था वेति द्विधा वर्त्तमानाश्च रोगारोग्यकरा इति शेषः । तत्र विकृताः क्षयं वा वृद्धिं वा प्राप्ता रोगकराः, प्रकृतिस्थाः स्वभावस्थाः शरीरधारणहेतवः पुनरारोग्यकराः—इत्यभिप्रायः । अतश्च हेतोः पण्डितः प्राज्ञस्तान् बुभुत्सेत बोद्धुमिच्छेत्, दुर्बोधानपि तान् स्वरूपतो वेत्तुं प्रयतेत ।

तत्र वातपित्तकफा इति त्रयाणां नामतः पृथङ्निर्द्देशेऽपि पुनस्त्रय इति कथनं नियमार्थम् । तथाच वातादयस्त्रय एव दोषा नित्याः, रजस्तमसी तु न नित्ये, पातञ्जलोक्तोपायैस्तयोः सर्व्वथा तिरोभावसम्भवादित्यभिसन्धिः । श्रूयते च "रजस्तमोभ्यां निर्म्मुक्ताः"—इत्यादि । एवञ्च वातादिदोषत्रयाद्दते शरीरमेव शीर्यते, रजस्तमोभ्यां निर्मुक्तं तु मनः सत्त्वमात्रेऽवतिष्ठमानं महीयते इत्यर्थोऽवसेयः ॥ ५ ॥

[ अथ प्रकृतिस्थवातादिकर्म्माणि । ]

अर्थादौ द्विविधा एते प्रसाद-मलभेदतः ।
सारभूताः प्रसादाः स्युः किट्टभूता मलाः स्मृताः ॥६॥
"उत्साहोच्छ्वासनिःश्वासचेष्टा धातुगतिः समा ।
समो मोक्षो गतिमतां वायोः कर्म्माऽविकारजम् ॥७॥"

एतेषाञ्च वातादीनां स्वरूपं दिङ्मात्रेण बोधयितुमाह—**अर्थेति ।** अर्थेति वातादयस्त्रयः आदौ वक्तव्योपक्रमे द्विविधाः स्वरूपभेदाद्बोद्धव्याः । स्वरूपभेदश्च प्रसाद-मलभेदतः । तत्र सारभूताः अच्छभागभूतास्ते प्रसादभूतास्ते स्तथाविधैरेव विक्षेपादानविसर्गकर्म्मभिः शरीरधारणात् । किट्टभूताः,— किट्टं नाम लौहादीनां धातानां यस्त्याज्यो भागः, तादृशत्याज्यभागरूपाः मलाः स्मृताः मलिनीकरणाद्धेतोः । अयमभिसन्धिः—एते खलु वातादयः शरीरे द्वेधाऽवतिष्ठन्ते, तत्र तेषां ये सूक्ष्माः सारभूताः शरीरधारणचालनान्नविपाचनपोषणादिकारिणो भागास्ते प्रसादाः, शरीरावाधकरास्त्याज्यभागास्तु श्लेष्मसिङ्घाणकाद्याः मलभूताः इति । एवञ्च प्रसादभूतेष्वेव तेषु वातादिसंज्ञा मुख्या ; मलभूतेषु तु गौणीत्याचार्य्याणामभिप्रायः । तथाच चरकः—"शरीरधातवः पुनर्द्विविधाः संग्रहेण मलभूताः प्रसादभूताश्च । तत्र मलभूतास्ते ये शरीरस्य बाधकराः स्युस्तद्यथा—शरीरच्छिद्रेषूपदेहाः पृथगजन्मानो बहिर्मुखाः परिपक्काश्च धातवः, प्रकुपिताश्च वातपित्तश्लेष्माणः, ये चान्येऽपि केचित् शरीरे तिष्ठन्तो भावाः शरीरस्योपघातायोपपद्यन्ते सर्व्वांस्तान् मलान् सञ्चक्ष्महे, इतरांस्तु प्रसादान्" इति ( च० शा० ६ अ० ) । तथाच वायुः साधारणो मरुदेव, पित्तं नाम मुखादिनिर्गतं पीतद्रव्यमेव, श्लेष्मा नासादिनिर्गतो मलविशेष एवेति न भ्रमितव्यम् । वातादिस्वरूपविशेषांश्च विस्तरतः प्रसङ्गशेषे विचारयिष्यामः ॥ ६ ॥

सम्प्रति वातादीनामविकृतानां स्वरूपं कार्य्यमुखेन परिचाययति चरकीयैरेव (च० सू० १८ अ०)त्रिभिः श्लोकैः—**उत्साहेत्यादिभिः** । उत्साहः कर्म्मारम्भप्रदो रजोगुणप्रभवो मानसव्यापारः । उच्छ्वासः श्वासपथेन बाह्यवायोराकर्षणम् । निःश्वासः आकृष्टश्वासवायोर्निरसनम् । चेष्टा तावदिह अविकृतचेष्टा भाषणगमनादि । समा धातुगतिर्धातूनां रसादीनामविषमा गतिर्निखिलशरीरसम्पोषणाय यथायथस्थानगमनम् । एतेन हृदयाद्धमनीषु, धमनीभ्यो जालकमार्गैः सिरासु, सिराभ्यश्च पुनर्हृदयाभिमुखं प्रवर्त्तमाना रक्तसंवहनादिक्रियाऽपि वातकृतैवेति[१]

१ एषा च रक्तसंवहनक्रियाऽस्मदीय "प्रत्यक्षशारीरे" सम्यग् वर्णिता ।

"दर्शनं पक्तिरूष्मा च क्षुत् तृष्णा देहमार्द्दवम्।
प्रभा प्रसादो मेधा च पित्तकर्म्माऽविकारजम्॥ ८॥"

सूच्यते। गतिमतां 'पुरीषादीनां वहिर्निःसरतां' सम: स्वभावानुकूलो मोक्षो विसर्ग—इत्येदखिलं रजोगुणात्मकस्य प्रवृत्तिधर्म्मिणो वायोरविकारजं प्राकृतं कर्म्मेति। एष तावत् संक्षेपः। विस्तरस्तु चरके वातकलाकलीये प्रतिपादितः, यथा—"वायुस्तन्त्रयन्त्रधरः, प्राणोदानसमानव्यानापानात्मा, प्रवर्त्तकश्चेष्टानामुच्चावचानां, नियन्ता प्रणेता च मनसः, सर्व्वेन्द्रियाणामुद्योतकः, सर्व्वेन्द्रियार्थानामभिवोढ़ा, सर्व्वशरीरधातुव्यूहकरः, सन्धानकरः शरीरस्य, प्रवर्त्तको वाचः, अतः प्रकृतिः स्पर्शशब्दयोः, श्रोत्रस्पर्शनयोर्मूलं, हर्षोत्साहयोर्योनिः, समीरणोऽग्नेः, दोषसंशोषणः, क्षेप्ता वहिर्मलानां, स्थूलाणुस्रोतसां भेत्ता, कर्त्ता गर्भाकृतीनाम्, आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः" इति। (च० सू० १२ अ०)। एवंविधश्च वायुरचिन्त्याऽतीन्द्रियशक्तिस्वरूप एवेत्यग्रे विशदं वक्ष्यामः।

अथ प्रकृतिभूतस्य पित्तस्य कार्य्यजातं संक्षिप्याह—**दर्शनमिति**। दर्शनं रूपोद्भासनम्। दृष्टिनाडीवितानभूते नेत्रान्तरीयचरमपटले आलोचकपित्तस्य तेजःप्रकाशनस्वभावस्याऽवस्थानात्तस्य कर्म्म दर्शनं रूपवद्वस्तुप्रतिभासनमुच्यते, तद्बोधविशेषस्तु प्रकाशितरूपस्य दृष्टिनाडीमार्गेण वायुना मस्तिष्कप्रापणे सति समुद्भवति। तथाचोक्तं चरके—"सर्वेन्द्रियार्थानामभिवोढ़ेति।" पक्तिः पाको भुक्तजरणात्मकः, स च आमाशये तीव्राम्लरसस्रावात् पक्वाशये पित्ताशयाद्यागतपाचकपित्तादिसंयोगाच्च सम्पद्यते। रसस्य च यकृत्प्लीह्नोर्विचरतो रञ्जकपित्तेन यः पाको रागदः, साऽपि पक्तिः। इयञ्चैतदाग्नेयं कर्म्म पाचक-रञ्जकपित्तजम्। ऊष्मा शरीरस्य स्वाभाविकः सन्तापः। क्षुत् क्षुधा—बुभुक्षा। तृष्णा पिपासा—जलाकाङ्क्षा। तानीमानि कर्म्माणि पित्तकृतानि, अग्निरूपेण पित्तेन दन्दह्यमानेषु शरीरधातुषु तेषामुद्भवात्। देहमार्द्दवं देहस्य मृदुता स्वेदादिकृता, स्वेदो हि पित्तभव उच्यते, तत्कृतञ्च मार्द्दवं त्वचि प्रसिद्धम्। अथवा त्वगधःस्थस्य मेदसः पित्ततेजसा नियतं विलाय्यमानस्य सम्पर्कात्त्वचि मार्द्दवं स्वाभाविकम्। प्रभा कान्तिः, भ्राजकपित्तस्य त्वचि स्थितस्य भ्राजनधर्म्मत्वात्। प्रसादः प्रकाशो, मेधा स्मृतिः, ते च द्वे सत्त्वगुणोद्भूते मनोनिष्ठे, सत्त्वगुणभूयिष्ठत्वात् पित्तस्य तेजोधर्म्मिणः। तदेतदखिलमविकारजं स्वाभाविकं पित्तकर्म्म संक्षेपात् सूचितं परमर्षिणा पुनरप्यग्रे सप्रपञ्चं वक्ष्यामः। एवंविधञ्च पित्तं धातुभूतं मूर्त्तामूर्त्तस्वरूपं स्यादित्यधुनाऽप्यवधेयम्।

१, २, एतद्विस्तरस्त्वस्मदीय 'प्रत्यक्षशारीरे' द्रष्टव्यः।

"स्नेहो बन्धः स्थिरत्वञ्च गौरवं वृषता बलम् ।
क्षमा धृतिरलोभश्च कफकर्म्माऽविकारजम् ॥ ९ ॥"

एवं विभिन्नकर्म्माणः प्रत्येकं पञ्चधा स्थिताः ।
प्रसादभूता वाताद्यास्तैः शरीरं प्रधार्य्यते ॥ १० ॥

अथ प्रकृतिभूतस्य कफस्य कार्य्यजातमाह—**स्नेह इति** । स्नेहः स्निग्धता सर्वधातुष्वाप्यभागयोजनात् । सोमगुणात्मको हि श्लेष्मा सर्वधातूनामार्द्रतां विदधद्रक्षति शोषणतः, अन्यथा सर्वमपि पित्ततेजसा शुष्येत । बन्धो बन्धनं यथा सर्व्वास्थिसन्धीनाम् । सन्धयो हि स्नायुनिबद्धा अपि नियतघर्षणेण क्षीयेरन् प्रच्यवेरंश्च स्थानाद् यदि श्लेष्मधराख्यकलान्तर्गतः श्लेष्मा घर्षणवारणेन तेषां बन्धनं नाभिरक्षेत् । तथाच बन्ध इत्यस्य बन्धाभिरक्षणमित्यर्थः । स्थिरत्वमङ्गानां दार्ढ्यम् । गौरवं प्राकृतं शरीरगौरवमशून्यतारूपम् । वृषता शुक्रलत्वम् । बलं व्यायामादिसहिष्णुता । तदेतत्त्रयमुपचयधर्म्मत्वात् श्लेष्मकृतम् । उपचयप्रदो हि श्लेष्मा सौम्यः, प्रभावात् । क्षमा प्रतीकारशक्तावपि अपकारसहत्वम् । धृतिर्धैर्य्यम् ; अलोभो लोभाभावः । तदेतत्त्रितयं किञ्चित्तमोगुणप्रभवं, तमोगुणप्रधानश्च श्लेष्मा प्रकृतिस्थः । तमोगुणस्यैव सत्त्वादिनियामकस्य अनतिप्रवृद्धस्य क्षमादिप्रभवत्वात् । क्षमादित्रयं हि शौर्य्य-चाञ्चल्य-लोभानां नियमनेन सम्भवन्ति । नियमनञ्च तमोगुणस्यैव धर्म्मः । प्रवृद्धस्तु श्लेष्मा प्रमादालस्यमोहादिकर इति न कश्चिद् विरोधः । अत एवोक्तं—"तमो[१]गुणाधिकः श्लेष्मा"—इत्यादि ( एतत् प्रासङ्गिकविचारस्त्वग्रे द्रष्टव्यः ) । स चायं सौम्यः श्लेष्मा धातुभूतो मूर्त्तामूर्त्तस्वरूपः स्यादित्यधुनाप्युन्नेयम् ॥ ९ ॥

तच्चैतदखिलं कर्म्म नानाप्रकारकं प्रसादभूतवातादिकृतं, तत्तत्कर्म्ममूलञ्च शरीरधारणं प्राणिनामित्युपसंहरति शिष्यबुद्धिवैशद्याय—**एवमिति** । ते पूर्व्वोक्ता वाताद्या वातपित्तकफाः एवमुक्तप्रकारेण विभिन्नकर्म्माणः पृथक्कर्म्मनिष्पादकाः प्रत्येकं पञ्चधा स्थिताः सन्तः, स्थानकार्य्यभेदेन एकैकस्य पञ्च पञ्च भेदस्वीकारात् । यथा सुश्रुते—"प्राणोदानौ समानश्च व्यानश्चापान एव च । स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥ वायुर्य्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक् । सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते । प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ॥ उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः । तेन भाषितगीतादिविशेषोऽभिप्रवर्त्तते । ऊर्द्ध्वजत्रुगतान् रोगान् करोति च विशेषतः ॥ आम-

[१] श्लेष्मा सत्त्वगुणप्रधान इति प्रत्ययस्तु केषाञ्चित् प्रामादिक एव । स चास्माभिरग्रे निरस्तः ।

ते च प्रसादा द्विविधाः सूक्ष्मस्थूलविभेदतः।
तत्र वायुः सदा सूक्ष्म इतरौ तु द्वयात्मकौ ॥ ११ ॥

पक्वाशयंचरः समानो वह्निसङ्गतः। सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि। गुल्माग्निसङ्गातीसारप्रभृतीन् कुरुते गदान्॥ कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः। स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि। क्रुद्धश्च कुरुते रोगान् प्रायशः सर्वदेहगान्॥ पक्वाधानालयोऽपानः काले कर्षति चाप्ययम्। समीरणः शकृन्मूत्रशुक्रगर्भार्त्तवान्यधः। क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान्॥" इति (सु० निदान० १अ०)। पञ्चधा पित्तस्वरूपं च तत्रैव यथा—"पक्वामाशयमध्यस्थं पित्तं चतुर्विधमन्नपानं पचति, विवेचयति च रस-दोष-मूत्र-पुरीषाणि, तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणाऽनुग्रहं करोति,—तस्मिन् पाचकोऽग्निरिति संज्ञा। यत्तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा,—स रसस्य रागकृदुक्तः। यत् पित्तं हृदयसंस्थितं तस्मिन् साधकोऽग्निरिति संज्ञा, सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः। यद् दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा,—स रूपग्रहणेऽधिकृतः। यत्तु त्वचि पित्तं, तस्मिन् भ्राजकोऽग्निरिति संज्ञा,—सोऽभ्यङ्गपरिषेकावगाहालेपनादीनां क्रियाद्रव्याणां पक्ता, छायानाञ्च प्रकाशकः।" इति (सु० सूत्र० २१ अ०)। अथ श्लेष्मणो भेदा अपि कर्म्मभेदेन पञ्चैव। तद्यथा सुश्रुते—"माधुर्य्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च। आमाशये सम्भवति श्लेष्मा मधुरशीतलः" (सु० सूत्र० २१ अ०)। तत्र 'क्लेदक' इति संज्ञा। "उरःस्थस्त्रिकसन्धारणमात्मवीर्य्येणान्नरससहितेन हृदयावलम्बनं करोति।" तस्मिन् 'अवलम्बक' इति संज्ञा। श्वासपथादीनां किञ्चित् श्लेष्मणाऽलेपनं स्वाभाविकमस्यैव श्लेष्मणः कर्म्म। "जिह्वामूलकण्ठस्थो जिह्वेन्द्रियस्य सम्यग्रसज्ञाने वर्त्तते।" तस्मिन् 'रसक' इति 'बोधक' इति वा संज्ञा। "शिरःस्थः स्नेहसन्तर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्य्येणानुग्रहं करोति।" तस्मिन् 'तर्पक' इति संज्ञा। "सन्धिस्थस्तु श्लेष्मा सर्व्वसन्धिसंश्लेषात् सर्वसन्ध्यनुग्रहं करोति।" तस्मिन् 'श्लेषक' इति संज्ञा। सोऽयं पञ्चविधस्वरूपः श्लेष्मा निखिलमपि शरीरमुदककर्म्मणाऽनुगृह्णाति। अतश्च विभुरूपेण सर्व्वशरीरचरा एते अनुग्राहकाः। प्रसादनधर्म्मत्वात् प्रसादभूताः प्रसन्नाच्छधातुरूपा विज्ञेयाः। तैश्च तथाभूतैः शरीरं धार्य्यते, प्रकर्षेण रच्यते। मलभूतैर्वातादिभिरीदृशानुग्रहकर्म्मणामशक्यत्वात्॥ १०॥

नन्वेते वातादयो मूर्त्ता अमूर्त्ता वा, तत्र वायुस्तावदास्ताममूर्त्तः, पित्तश्लेष्माणौ तु मूर्त्तावेव स्यातामित्याशङ्कां निरस्यति संशय-च्छेदिना वचनेन—**ते चेति।**

ते च पूर्व्वोक्तकर्म्माणः प्रमादाः प्रमादरूपा वाताद्या द्विविधा द्वेधा वर्त्तन्ते स्वरूपेण । सूक्ष्मस्थूलविभेदतः,- सूक्ष्मरूपेण स्थूलरूपेण च विशिष्टभेददर्शनात् । सूक्ष्मत्वं च नामेह अतीन्द्रियत्वम्, स्थूलत्वन्तु इन्द्रियगोचरत्वं दृश्यत्वं वा । नन्वेवं वायुरपि सूक्ष्मः स्थूलश्चेति द्विविधः स्यादिति विशेषमाह—तत्रे ति ।

तत्र तेषां मध्ये वायुः सदा सर्व्वास्ववस्थासु सूक्ष्मः अप्रत्यक्षो विद्युच्छक्तिवद् अचिन्त्यातीन्द्रियशक्तिस्वरूपः क्रियामात्रानुमेयश्च । इतरौ पित्तश्लेष्माणौ तु द्वयात्मकौ सूक्ष्मरूपतः स्थूलरूपतश्च वर्त्तते शरीरे । तत्र वायोः सूक्ष्मत्वं चरके वातकलाकलीयाध्याये यथा प्रतिपादितं तथा प्रागदर्शयाम । सुश्रुतेऽप्युक्तम्—"स्वयम्भूरेष भगवान् वायुरित्यभिशब्दितः । स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च । सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः । स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् । अव्यक्तो व्यक्तकर्मा च रूक्षः शीतो लघुः खरः । तिर्य्यग्गो द्विगुणश्चैव रजोबहुल एव च । अचिन्त्यवीर्य्यो दोषाणां नेता रोगसमूहराट्" इत्यादि ( सु० निदान० १अ० )। पित्तस्यापि सर्वत्रैवातीन्द्रियत्वमन्यत्र पाचकपित्तात् । पाचकपित्तं ह्यामाशये अम्लरूपमंशतश्च पच्यमानाशयात् प्रभृति कटुरसमुपलभ्यते । दृश्यञ्च तत् स्वाभाविकं सद्यो विपाटितोदरस्य शरीरे, विकृतञ्च मुखादिनिर्गतं प्रच्छर्दतः पुरुषस्य । तदेतत् स्थूलरूपं पित्तस्य । सूक्ष्मा तु रसरक्तादिधातुविपरिणामिनी क्रिया सन्तापशोषणाऽदानादिक्रिया च सूक्ष्मस्यैव पित्तस्य । तदपि पाचकपित्तस्यैव सूक्ष्मरूपेण चरतश्चरकमते धात्वग्निसंज्ञस्य कर्म्मेति आचार्य्याः । तथाहि सुश्रुते—"तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्म्मणाऽनुग्रहं करोति" इति (सु० सूत्र० ११ अ०) । "जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते"—इति च । अथ श्लेष्मा पुनः स्थूलप्राय उदकगुणभूयिष्ठः । किन्तु तर्पकाख्यः श्लेष्मा सूक्ष्मप्रायः । यश्चामाशये क्लेदकाख्यः श्लेष्मा स्थूलस्तस्यापि सूक्ष्मो भागः सर्वशरीरचरः सर्वधातुष्वाप्यभागयोजकः—इत्याहुः । यथा सुश्रुते—"स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्म्मणानुग्रहं करोतीति ।" अपरे त्वाहुः— अवलम्बक-रसक-श्लेषकाख्याः श्लेष्मभेदाः स्थूला एव सर्वजनदृश्याः, तत्रावलम्बकः श्वासपथादेरभ्यन्तरतः स्वाभाविकाऽर्द्रताप्रदः । रसको जिह्वादेरार्द्रतासम्पादकः स्वाभाविकलालारूपः स्वादग्रहणसहायः । श्लेषकः सन्ध्यन्तः स्नेहवत् पिच्छिलपदार्थमयः—इति । तर्पकोऽपि श्लेष्मा

१ द्विगुण इति सत्त्वतमः सम्पृक्तः, तेन तैजसस्य सत्त्वगुणस्य सम्पर्काद्रूक्षः, सौमस्य तमोगुणस्य सम्पर्काच्छीतश्च, स्वयं तु स्वभावाद्रजोगुणभूयिष्ठ इत्यभिप्रायः । २ त्रिरूपं हि स्थूलं पित्तं पाचकाख्यं सुविदं शारीरज्ञैः । तत्रामाशये अम्लरसं, ग्रहण्यां पित्तकोषादागतं कटुतिक्तप्रायं, अग्न्याशयान्निःसृतं कटुरसम् । अतएव पित्तं क्वचिदम्लं, क्वचित् कटु चाहुरिति तत्त्वम् ।

मलभूतौ तु नियतं स्थूलौ पित्तकफौ स्मृतौ।
ते प्राकृताः प्रसादाः स्युर्वैकृता मलसंज्ञकाः॥ १२॥

नासाचक्षुरादीनामार्द्रताप्रदः स्थूलभूयिष्ठ एवेत्येके। अन्ये तु—सोऽयम् "इन्द्रियाणामात्मवीर्य्येणानुग्रहं करोती"ति कृत्वा शिरसि सौम्यगुणाधानकरः सूक्ष्म एवेत्यामनन्ति। वस्तुतस्तु तस्यापि द्वैरूप्यमेव तत्त्वम्। किञ्च स्थिरत्व-गौरव-वृषता-बल-क्षमादिकर्म्माणि पूर्वोक्तानि प्राकृतस्य सूक्ष्मस्यैव सर्व्व-शरीरचरस्य श्लेष्मणः कार्य्याणि स्युरित्यपि कदाचित् सूक्ष्मस्वरूपता श्लेष्मणो दुर्वारैव। न हि तत्तत्स्थानमात्रव्यापकैरवलम्बकादिस्थूलश्लेष्मभेदैः सुकराणि तानि कार्य्याणि कयाऽपि कल्पनया। एवञ्च प्रसादभूतानां वातादीनां निखिल-शरीरधारणाय स्थूणात्रयभूतानामखिलं कर्म्मजातमुपसंहरन्नुपदिशत्याचार्य्यः— "विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा। धारयन्ति जगद् देहं कफपित्ता निलास्तथा" इति—(सु० सूत्र० २१ अ०)। यत्तु सुश्रुते क्वचित् शोणितस्यापि दोषत्वमुक्तं "तैरेव शोणितचतुर्थै"रिति (सु० सूत्र० २१अ०), तदौपचारिकं व्रणानां विशेषेण शोणितसन्धानीयत्वात्। वस्तुतस्तु स्वतन्त्रदूषणात्मकत्वाभावात् प्रकृत्यारम्भकत्वाभावाच्च दूष्यतैव शोणितस्य न दोषता।

अथ पित्तश्लेष्मणोर्मलभूतयोः स्वरूपं विशिनष्टि—**मलभूताविति**। मलभूतौ किट्टरूपौ पित्तकफौ तु नियतं सदैव स्थूलौ स्मृतौ, न तु पूर्ववद् द्वयात्मकौ। तथाच अम्लपित्तादिविकारेषु मुखादिनिर्गतमम्लरसं कटुरसं वा पित्तम्, प्रति-श्यायादौ नासादिस्रुतः श्लेष्मा चेति द्वयमपि किट्टरूपमेवावगन्तव्यम्। ईदृशयोश्च किट्टरूपत्वं प्रतिपादयत्याचार्य्यः—"किट्टमन्नस्य विण्मूत्रं रसस्य च कफोऽसृजः। पित्तं मांसस्य च मलो मलः स्वेदस्तु मेदसः"इति (च० चिकि० १५अ०) किट्टस्वरूपञ्च यथा—"पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च। उष्णं कटुरसञ्चैव विदग्धं चाम्लमेव च॥ श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च। मधुरस्त्वविदग्धः स्याद् विदग्धो लवणः स्मृतः" इति (सु० सू० २१अ०) वायुस्तु मलावस्थायामपि सूक्ष्म एव। यत्तूक्तं—"पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना। परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः" इति, (च० चि० १५अ०)—तत्र वायुपदेन अन्नादिविपरिणाम-जन्यो वाष्पविशेषउच्यते आनाहाटोपादिकरः, तदवरोधश्च स्वाभाविकवायुक्रिया-जन्यमलादिनिःसारणकर्म्मणोऽभावादेव भवति। अथ तादृशं वाष्पमेव वायोर्मलं मन्यसे, तथापि कार्य्यादिवेद्योऽयं नेन्द्रियगोचर इति पित्तश्लेष्मणोरेव मलभूतयोः स्थूलत्वाभिधानं सङ्गच्छते। अथ शिष्यबुद्धिवैशद्याय प्रसाद-मलभूतानां वातादीनां

प्रकृति-विकृतिभावसम्बन्धं स्फुटं प्रदर्शयति—ते इति। ते वातादयः प्राकृताः स्वाभाविका एव प्रसादाः प्रसादसंज्ञाः प्रागुक्तस्वरूपाः, प्रसादनकर्म्माणः सूक्ष्म-स्थूलरूपाभ्यां स्थिताः। तैरेव ह्यव्यापन्नैः प्रसन्नात्मेन्द्रियमनाः स्वस्थो भवति पुरुषः। वैकृता विकृतिं प्राप्ता व्यापन्नास्तु ते मलसंज्ञका मलिनीकरणाद्धेतोः। उक्तञ्च—"शरीरदूषणाद्दोषा धातवो देहधारणात्। वातपित्तकफा ज्ञेया मलिनीकरणान्मलाः।" इति (शार्ङ्ग० पूर्व० ५ अ०)। आहुश्च प्राञ्चः—"पित्तादेवोष्मणः पक्तिर्नराणामुपजायते। पित्तञ्चैव प्रकुपितं विकारान् कुरुते बहून्॥ प्राकृतस्तु बलं श्लेष्मा वैकृतो मल उच्यते। स एवौजः स्मृतं काये स च पाप्मोपदिश्यते॥ सर्वा हि चेष्टा वातेन सप्राणाः प्राणिनां स्मृताः। तेनैव रोगा जायन्ते तेन चैवावरुध्यते।" इति (च० सूत्र० १७ अ०)। तदेवं बुद्धिमता प्रसादभूतानां मलभूतानाञ्च वातादीनां भेदः पर्वतवदप्रकम्प्यः सदा स्मर्त्तव्यः, यतोऽमुं भेदमजानन्तो बहुधा व्याकुलीकुर्वन्ति परमर्षीणामभिप्रायमनेके भिषग्ब्रुवाः।

इदञ्चात्रावधेयम्। एतेषां वातादीनां प्रसादभूतानां मलभूतानाञ्च सत्यपि महति भेदे प्रसाद मलभावसम्बन्धोऽप्यतितरां नेदिष्ठो व्यवसेयः, सूक्ष्माणां प्रकृतिभूतानां वातादीनां प्रसादाख्यानां कारणभूतानां स्थूलेषु विकृतिरूपेषु मलाख्येषु कार्य्यभूतेषु परिणामदर्शनात्, पञ्चतन्मात्राणां पञ्चमहाभूतेषु परिणामवत्। एवञ्च यत्र यत्र कायांशे विशेषेण मलपरिणामो वैकृतलक्षणदर्शनं वा वातादीनां, तत्रैव तेषामवस्थानविशेषः कल्प्यते, स्थूलबुद्धीनां बोधसौकर्य्याय। तथाहि चरके महारोगाध्याये—"तेषां त्रयाणामपि दोषाणां शरीरे स्थानविभागमनुव्याख्यास्यामः। तद्यथा—वस्तिः पुरीषाधानं कटिः सक्थिनी पादावस्थीनि च वातस्थानानि,—तत्रापि पक्वाशयो विशेषेण वातस्थानम्। स्वेदो रसो लसीका रुधिरमामाशयश्चेति पित्तस्थानानि, तत्राप्यामाशयो विशेषेण पित्तस्थानम्। उरः शिरो ग्रीवा पर्वाण्यामाशयो मेदश्च श्लेष्मणः स्थानानि, तत्रापि उरो विशेषेण श्लेष्मस्थानम्।" इति (च० सूत्र० २० अ०)। परमार्थतस्तु वातादयः सर्वशरीरचरा एव। अतश्चानुपदमेव दृश्यते चरके तत्रैव—"सर्वशरीरचराः खलु वातपित्तश्लेष्माणः सर्वस्मिन् शरीरे कुपिताकुपिताः शुभाशुभानि कुर्वन्ति" इति। किञ्चैतेषु वातादिषु प्रसादभूतेषु वायुरेव प्रधानम्, पित्तकफयोस्तदधीनत्वात्। उक्तञ्च—"वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम्। वायुर्विश्वमिदं सर्वं प्रभुर्वायुश्च कीर्त्तितः" इति (च० चिकि० २८ अ०)। "पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः। वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवदिति।" (शार्ङ्ग० पू० ५ अ०)

ननु वायुश्चेदतीन्द्रिय एव, तर्हि किमिदमुच्यते—"रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः। विपरीतगुणैर्द्रव्यैर्मारुतः सम्प्रशाम्यति" इति (च० सू०

१अ०) नहि रूक्षत्वशीतत्वादिगुणा अतीन्द्रियस्य स्युरिति चेत्,— उच्यते । रूक्षत्वादिगुणा वायोः कार्य्यानुमेया एव न तु साक्षादिन्द्रियगोचरा अस्मादृशाम् । अत एव सूक्ष्मत्वमपि युगपदुद्दिशति भ्रमवारणार्थमाचार्य्यः । शीतत्वं तु वायोः स्वाभाविकमपि न नियतं दृश्यते,— तस्य योगवाहित्वात् । तथाह्युक्तं —"योगवाहः परं वायुः संयोगादुभयार्थकृत् । दाहकृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात्" इति । एवंविधगुणसमूहसंपन्नश्च वायुरतीन्द्रियस्तन्त्रयन्त्रधरः सर्व्वथा सर्वैर्भावैर्यथाशक्ति वेदितव्यः ।

अथैषां वातादीनां प्रकृत्यारम्भकत्वं चाऽऽहुराचार्य्याः, गर्भाधानकाले मातापित्रोः शारीरावस्थाविशेषानुसारतो जातस्य प्रकृतिनिष्पत्तेः । तदाह सुश्रुतः— "शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः । प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु"— इत्युपक्रम्य "तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्य्यनार्य्यो गान्धर्वचित्तः स्फुटितकरचरणोऽतिरूक्षश्मश्रुकेशनखः क्रोधी दन्तनखखादी च भवति ।"— इति वातप्रकृतेर्लक्षणम् । "स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलो दुर्भगो वलीपलितखालित्यजुष्टो बहुभुगुष्णद्वेषी क्षिप्रकोपप्रसादो मध्यमबलमध्यमायुश्च भवति ।"—इति पित्तप्रकृतेर्लक्षणम् । "दूर्वेन्दीवरनिस्त्रिंशार्द्रकारिष्टशरकाण्डानामन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बलवांश्चिरग्राही दृढवैरश्च भवति ।"— इति कफप्रकृतेर्लक्षणम् ।

नन्वेते वातादयः किंगुणास्तत्र वायुस्तावद्रजोगुणबहुलः स्यात्, चलनधर्म्मत्वादित्यत्र न संशयः ; पित्तं तु तामसं स्यात्, श्लेष्मा च सात्त्विकः । यतः पैत्तिकप्रकृतौ पुरुषे तामसा एव गुणाः कोपादयो विशेषेण दृश्यन्ते, कफप्रकृतौ च सात्त्विकाः क्षमादयः । उक्तञ्च—"रक्तान्तनेत्रः सुविभक्तगात्रः स्निग्धच्छविः सत्त्वगुणोपपन्नः । क्लेशक्षमो मानयिता गुरूणां ज्ञेयो बलासप्रकृतिर्मनुष्यः ।"—इति चेत् । नैवम् । प्रभाप्रकाशादिधर्म्मिणः पित्तस्य तमोभूयिष्ठत्वासम्भवात् । तथाह्युक्तं—"सत्त्वं लघु प्रकाशकमिति ।" अत एव "मेधावी निपुणमतिर्विगृह्य वक्ता तेजस्वी समितिषु दुर्निवारवीर्य्यः" इत्यपि पित्तप्रकृतिगुणानाहुः । तीक्ष्णकोपता तु किञ्चित्तमोगुणसम्पर्काद् भवति । अतश्चोक्तं—"पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोत्तरम्" इति (शार्ङ्ग० पू० ५ अ०) । सत्त्वगुणोत्तरं सत्त्वप्रधानं, न तु सर्वथा सात्त्विकम् । श्लेष्मा पुनस्तमोगुणोत्तरः । श्लेष्मरोगेषु श्लेष्मप्रकृतौ च गौरवालस्यादीनामाधिक्यदर्शनात् । गुणाश्च क्षमा-धैर्य्यादयः तमोगुणसम्पर्केणाभिभूताद्रजसः सत्त्वाच्चोद्भवन्ति शौर्य्यचाञ्चल्यादीनां नियमनादित्यवोचाम । एवञ्च सत्स्वपि नानासद्गुणेषु श्लेष्मप्रकृतिः पुरुषो नियतं दीर्घसूत्रो दृश्यते—इति दिक् । उक्तञ्च—"श्लेष्मा स्निग्धो गुरुः

रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।
दूष्यास्ते तदधिष्ठानमाशयाश्च पृथग्विधाः ॥ १३ ॥

श्वेतः पिच्छिलः शीतलस्तथा । तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत् ।" इति ( शार्ङ्ग० पू० ५अ० ) । श्लेष्मप्रकृतिः पुरुषः "सत्त्वगुणोपपन्नः"—इत्यभिधानन्तु सत्स्वपि आलस्यादिषु तमोगुणकार्य्येषु दोषेषु मानसानां बहूनां सात्त्विक-राजस-गुणानामप्यधिकारी भवति प्रभावात् श्लेष्मप्रकृतिरित्यर्थं सूचयति । सत्त्वपदं हि मनोवाचि दृश्यते बहुधा वैद्यके । यथा चरके –"शरीरं सत्त्वसंज्ञञ्च व्याधीनामाश्रयो मतः ।". "सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवद्" इत्यादौ । तथाच न कश्चिद् विरोधः । वस्तुतस्तु किञ्चित्तमोगुणाधिक्येऽपि त्रयो गुणाः सामञ्जस्येन तिष्ठन्ति श्लेष्मप्रकृताविति तां विशेषेण प्रशंसन्ति कुशलाः—इति तत्त्वम् ।

अथ संक्षेपतो दोषसंग्रहं व्याकृत्य सम्प्रति दूष्यसंग्रहं निबध्नाति—**रसेत्यादि ।** रसश्चासृक् च मांसं च मेदश्चास्थि च मज्जा च शुक्रञ्चेति ये सप्त धातवः शरीर-धारकत्वात् प्राधान्येन धातुसंज्ञास्ते दूष्याः दूषणीयाः विकार्य्याः । वातादयो हि प्रकुपिताः विकरणशीला विकार्य्यवस्तून्यपेक्षन्ते, रसादीनि च तानि विकार्य्यवस्तूनि । अथैषां रसादीनां स्वरूपाणि अस्मत्कृत-"प्रत्यक्षशारीर"तः समुद्ध्रियन्ते—"तत्र रसो नाम—चतुर्विधस्य षड्रसस्य द्विविधवीर्य्यस्याहारस्य सम्यक् परिणतस्य तेजोभूतः सारः सौम्यः । 'रस गतौ धातुरहरहर्गच्छतीति रसः' । स खल्वाप्यो रसो भुक्त-मार्गस्थैरतिसूक्ष्मैः स्रोतोभिराकृष्यमाणो यकृत्प्लीहानौ प्राप्य पाक-रागावुपैति रक्त-संज्ञाञ्चानन्तरं लभते । भवति चात्र—"रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् । अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥" ( सु० सू० १४ अ० ) । रक्तं नाम—सकलधातुपोषणः सारः शरीरस्य रस एव रञ्जकाख्येन पित्तेन तथा विपरिणमितः । तस्य च ग्रहणप्रेरणस्थानं हृदयं, तद्धि हृदयादेव धमनीरनु-प्रविश्य कृत्स्नं शरीरमहरहस्तर्पयति धारयति यापयति जीवयति च । मलिनी-भूतञ्च तत् शरीरप्रचारात्, सिराभिः प्रविशति हृदयमेव पुनः शुद्ध्यर्थं फुस्फुस-गमनाय । ( लसीका तु—शोणितस्यैव तन्वच्छजलभागो रसायनीषु प्रचरिष्णुः सर्व्वधातुपोषणः, तस्याः शोणित एव रस एव वान्तर्भावः । ) मांसं नाम—पेशी-नामुपादानधातुर्मृदुलोहिततन्तुमयो जलौकाशरीरवत् सङ्कोचप्रसरणशीलः । मेदो नाम—सान्द्रसर्पिस्तुल्यः स्नेहधातुः शरीरस्य, तस्य स्थानमुदरान्तस्त्वचामधश्च । (वसा तु—मांसगतः स्नेहस्तस्या मेदस्यनुप्रवेशस्तुल्योपादानत्वात् ।) अस्थीनि नाम—स्थिरकठिनावलम्बनधातुः कायस्य यमाश्रित्य समग्रं शरीरमवतिष्ठते । मज्जा

नाम—अस्थिमध्यगतः स्नेहः, स द्विविधः पीतो रक्तश्च । तत्र पीतो नलकास्थ्नामन्तः, रक्तः सर्व्वेष्वितरेषु प्रान्तभागेषु च नलकास्थ्नाम् । सोऽयं स्वरूपतो मेदसोऽभिन्नोऽपि कर्म्मविशेषात् पृथगेव धातुः । शुक्रं नाम—प्रजाजननार्थश्चरमो धातुः, तस्य प्रभवस्थानं मुष्कौ, स्रोतसी चास्य द्वे मूत्रमार्गप्रतिबद्धे, तत्खल्वव्याकृतं 'स्फाटिकाभं द्रव्यं स्निग्धं मधुरं मधुगन्धि' चाहुः । त एते रसादिशुक्रान्ता धातवः" इति (प्रत्यक्ष० २अ०)। वाग्भटस्त्वाह—"रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः । सप्त दूष्या मला मूत्रशकृत्स्वेदादयोऽपि च ।" (अष्टाङ्गहृ० १ अ०)। व्याख्यातञ्चेदमरुणदत्तेन—"शकृदादयो मला उच्यन्ते । अपिचेति शब्दाद् दूष्याश्चेति । न केवलं रसादय एव दूष्या यावन्मलास्तेऽपि वातादिभिर्दूष्यन्त इति दूष्याः । एवं च रसादीनां दूष्यसंज्ञा धातुसंज्ञा च, तथा विण्मूत्रादीनां मलसंज्ञा दूष्यसंज्ञा चेति[1]।" सोऽयं शारीरदूष्यसंग्रहः । मानसरोगेषु तु रजस्तमसी दोषौ मन एव दूष्यम् । मनसोऽणुत्वान्निरवयवत्वाद् दूष्यान्तरासम्भवात् ।

इदञ्चात्रावधेयम् । एतेषां रसरक्तादीनां दूष्याणां वातादिभिराश्रयाश्रयिभावोऽपि घनिष्ठः । यथाह वाग्भटः "तत्रास्थिनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः । श्लेष्मा शेषेषु तेनैषामाश्रयाश्रयिणां मिथः । यदेकस्य तदन्यस्य वर्द्धन-क्षपणौषधम् । अस्थिमारुतयोर्नैवम् ।"—इति (अष्टाङ्गहृ० सूत्र० ११अ०)। अतएव वातवृद्धौ पर्वभेदादि, पित्तवृद्धौ स्वेदरक्तदुष्ट्यादि लिङ्गं प्रायिकमित्याद्यनुव्याख्यास्यामः । दोषाणां सामता चाग्रे वक्ष्यमाणा अविपक्कान्नरससम्पर्कादेव विज्ञेया ।

अथैवं दोषदूष्यसंग्रहमुपक्रम्य तत्स्थानान्याचष्टे—तदधिष्ठानमिति । तेषां दोषाणां दूष्याणाञ्चाधिष्ठानमाश्रयस्थानं पृथग्विधा आशयाः शास्त्रे समुपदिष्टाः प्रत्यक्षदृश्याः । अत्र आशेरते दोषधातुमला एषु—इति व्युत्पत्त्या आशयपदेन श्वसनान्नविपाचन-मूत्रोच्चारविभजन-शोणितसंवहनादिक्रियाकराणां फुस्फुसाऽऽमाशयवृक्कान्त्रहृदयादीनां ग्रहणम्, उपलक्षणतः सिराधमन्यादीनाञ्च । आशयवर्णनविस्तरस्तु अस्मदीयप्रत्यक्षशारीरे प्रतिपादितो द्रष्टव्यः । दिग्दर्शनार्थन्तु इहापि किञ्चिदुद्ध्रियते—"आशया नाम—श्वसनान्नपचनशोणितसंवहनादिक्रियाकरा बहवः । तेषां तिसृषु गुहास्ववस्थानम् । तास्तु यथा—शिरोगुहा, उरोगुहा, उदरगुहा चेति । तत्र शिरोगुहायां—मस्तिष्कमनुमस्तिष्कं सुषुम्नाशीर्षकञ्च । तदेतत्त्रयं निखिलसंज्ञाचेष्टामूलं, येन सम्बध्यते निम्नतः सुषुम्नाकाण्डः पृष्ठवंशान्तरस्थः । सेयं प्रथमा शिरोगुहा व्याख्याता भवति । उरो-

१ वातादीनां तु दोषसंज्ञा धातुसंज्ञा च, क्वचित् मलसंज्ञाऽपि—इत्युक्तपूर्वम् ।

[अथ विकृतवातादिकर्म्माणि]

**दोषाणां विकृतिर्द्वेधा क्षयजा वृद्धिजा तथा।**
**धातुवैषम्यजा रोगा आरोग्यं धातुसाम्यजम्॥**

गुहायां—फुस्फुसद्वयं हृदयञ्च प्रधानम्। तत्र श्वसनार्थौ फुस्फुसौ श्वासपथेन कण्ठाभिगतेनोरसि द्वेधाविभक्तेन प्रतिबद्धौ। शोणितसंग्रहणप्रेरणार्थकं हृदयं पुण्डरीकाकारं फुस्फुसयोरन्तरालस्थम्, तत्र प्रतिबद्धं महासिराद्वयं महाधमनीमूलं सिराधमन्यश्च यथास्थानं वक्ष्यमाणाः। सेयं द्वितीया उरोगुहा व्याख्याता भवति। उदरगुहायां भुक्तमात्रस्याधारो दृतिसमाकार आमाशयः, स नाभेरूर्द्ध्वं (मध्यतः)। पच्यमानस्य पक्वस्य चाशयः पक्वाशयः स नाभेरधः परितश्च। (पक्वाशयश्च मलाशयश्चान्त्राणि चेत्यनर्थान्तरम्)। पाचकरञ्जकपित्तयोः प्रभवो यकृत्, तत्र संलग्नः पित्तकोषः। रञ्जकपित्तप्रभवः प्लीहा। यकृत्प्लीह्नोश्च स्थितिः क्रमेण दक्षिणतो वामतश्चामाशयात्। पृष्ठत आमाशयात् कुठारिकाकारोऽग्न्याशयः। मूत्रप्रभवौ महाशिम्बीबीजाकारौ कोषौ वृक्कौ नाम कटिपार्श्वयोः। वृक्कप्रभवस्य मूत्रस्रोतोभ्यां समागतस्य मूत्रस्याशयो वस्तिर्नाम स नाभेरधः। योनेरूर्द्ध्वमुखप्रतिबद्धः क्षुद्रकलशाकारो गर्भाशयः, स स्त्रिया एव। सोऽयं स्वमुष्टिमात्राकारोऽगृहीतगर्भायाः, गृहीतगर्भायास्तु यथागर्भमभिवर्द्धते। तस्य चोभयोः पार्श्वयोः बीजकोषौ नाम, तौ बीजस्रोतोभ्यां प्रतिबद्धौ गर्भाशयेन—तावेव तु पुरुषस्य बहिःस्थितौ मुष्कौ नाम शुक्रप्रभवौ। सेयं तृतीया उदरगुहा व्याख्याता भवति। ता एतास्तिस्रो गुहा यासु निखिलाशयावरोधः।" इति (प्रत्यक्ष० २अ०)।

अथ वातादीनां प्रसादमलभावाभ्यां स्थितानां प्राकृतं स्वरूपं निरूप्य सम्प्रति तद्विकृतेः प्रकारद्वयं दर्शयति—**दोषाणामिति**। दोषाणां वातपित्तकफानां विकृतिः स्वभावविपर्य्ययो द्वेधा द्विप्रकारा ज्ञातव्या—क्षयजा वृद्धिजा चेति। तत्र क्षयो ह्रासः, वृद्धिरुपचयः प्रकोपो वा। न च प्रकोपो नाम वृद्धेरतिरिक्तं[1] किञ्चिदिति शङ्क्यम्। प्रमाणाभावात्। यत्तु चरके—"क्षयः स्थानञ्च वृद्धिश्च विज्ञेया त्रिविधा गति"रिति, तत्र स्थानमित्यस्य समत्वमित्यर्थः सम्प्रदायप्रसिद्धः[2]। तेन क्षयवृद्धी विकृतिप्रकारभूते, समत्वञ्च प्राकृतमित्याचार्य्याणामभिप्रायः। नन्वमूर्त्तस्य वायोरतीन्द्रियावस्थयोः पित्तकफयोश्च कथङ्कारं ज्ञायेतां क्षयवृद्धी इति चेत्। उच्यते। यथा हि अतीन्द्रियाणां सत्त्वरजस्तमसां स्वाभाविककर्म्मोपचयो-

१ तुल्यार्थकम्। २ यथा निदानटीकायां पूर्वरूपव्याख्याने विजयः।

## ( तत्र वातादिक्षयलिङ्गानि )

**तत्र वातक्षये मन्दचेष्टता वचसोऽल्पता।**
**अल्पहर्षस्तथा मूढसंज्ञता चेति लक्षणम्॥ १५॥**
**पित्तक्षये तु मन्दोष्मा मन्दाग्नित्वं प्रभाल्पता।**

पचयदर्शनादनुमीयेते क्षयवृद्धी तद्वदिहापि ज्ञायेताम्। किञ्चेह दोषवद् दूष्याणामपि क्षयवृद्ध्यात्मिका विकृतिरस्तीत्यपि स्मर्त्तव्यम्। अथ क्षयवृद्ध्योः फलमाह—धातुवैषम्यजा इति। वैषम्यं क्षयवृद्ध्यात्मकं, तच्च धातूनां वातादीनां रसादीनाञ्च। धातुशब्देन सर्वेषामेषामुपादानात्। तज्जातास्तत्समुत्थाश्च रोगा व्याधयो वक्ष्यमाणस्वरूपाः। आरोग्यं रोगाभावः स्वास्थ्यं तु धातुसाम्यजम्, धातूनां स्वाभाविकपरिमाणावस्थानस्य फलभूतम्। न च साम्यं नाम धातूनां परस्परपरिमाणसमत्वमिति शङ्क्यम्, तेषां पुरुषे पुरुषे स्वभावतः प्रकृत्याहारविहारादिभेदतश्च परिमाणभेदसंनियमात्। तेन साम्यं खल्विह वैकारिकवैषम्याभाव इति तत्त्वम्। आयुर्वेदप्रयोजनञ्च वैकारिकवैषम्यनिवारणमाहुः, तदुक्तम्—"क्षीणा वर्द्धयितव्याः, वृद्धा ह्रासयितव्याः, समाः पालयितव्या इति" ( सु० सूत्र० १ अ० )। स्वाभाविकवैषम्यं पुनः—"वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च। दोषधातुमलानान्तु परिमाणं न विद्यते।"—( सु० सूत्र० १६ अ० ) इत्यादिना वचनेन अञ्जलिपरिमाणतश्चोक्तमाकरे द्रष्टव्यमित्यलमिहातिप्रसङ्गेन।

अथ सौश्रुतवचोऽनुवादेन क्षयवृद्धिलिङ्गेष्वादौ क्षयलिङ्गानि वक्तुमुपक्रमते वातादिक्रमेण—**तत्रे**ति। तत्र धातुवैषम्यप्रकारेषु मध्ये वातस्य पूर्वोक्ताचिन्त्यातीन्द्रियशक्तिस्वरूपस्य क्षये सति मन्दचेष्टता उत्साहोच्छ्वासनिःश्वासादीनां यथोक्तस्वाभाविककर्म्मणां मन्दता। वचसो वाक्स्फुरणस्याल्पता। अल्पहर्षो विषादप्रवणता, स्त्रीषु प्रहर्षमान्द्यञ्च। मूढसंज्ञता मूढप्रायचित्तता, न तु मूर्च्छा,—"मूर्च्छा पित्ततमःप्राये"ति स्पष्टमभिधानात्। तदेतच्चतुष्कं बीजरूपेण वातक्षयस्य लक्षणं, विस्तरस्य तु न प्रमाणमस्ति,—यं खल्विह सर्वतन्त्रयन्त्रेषु स्वाभाविकक्रियाल्पतानिमित्तमनेकलक्षणं स्वरूपेणाऽनाकलयन्तो बहुधा विमुह्यन्ति स्वल्पधियः। सोऽसौ विस्तरो दर्शितदिशा मतिमद्भिः समुन्नेयः।

अथ **पित्तक्षये इति।** मन्दोष्मा स्वाभाविकशारीरसन्तापस्याल्पता। मन्दाग्नित्वं क्षुधाया अन्नजरणशक्तेश्चाल्पता। प्रभाल्पता कान्तेरल्पता, स्वाभाविकदेह-

श्लेष्मक्षये रूक्षताऽन्तर्दाहस्तृष्णा च जागरः ।
अन्यत्वाऽमाशयात् सर्वाशयानां शिरसस्तथा ।
शून्यता सन्धिशैथिल्यमिति लिङ्गानि षड् विदुः ॥१६।१७॥

## ( अथ वातादिवृद्धिलिङ्गानि )

वातवृद्धौ परुषता त्वचः कार्श्यञ्च कृष्णता ।
गात्राणां स्फुटनञ्चोष्णकामिता चाल्पनिद्रता ।
बलाल्पत्वं तथा गाढवर्चस्त्वञ्चैवमादि च ॥ १८ ॥

मार्द्दवाभावात्, प्रभायाः पित्तकृतत्वस्वीकाराच्च । एतत्त्रयञ्च बीजरूपं लिङ्गमुक्तम्, विस्तरतस्तु दृष्टिशक्तिह्रासो मनःप्रसादाभावो मेधाल्पतादि च पूर्वोक्तस्वाभाविकपित्तकर्म्मणां स्वाल्लक्षणहानिः समुन्नेयम् ।

अथ श्लेष्मक्षयलिङ्गान्याह— श्लेष्मेति सौश्रुतवचमेव । रूक्षता स्नेहाभावः, अन्तर्दाहस्तृष्णा चेति त्रयं स्वाभाविकसोमगुणक्षयात् । जागरो निद्राविरहः, निद्रायास्तमःप्रभवत्वात्, तमोगुणाधिकत्व श्लेष्मत्यवोचाम । अन्यत्वामाशयादिति । उरःशिरश्चामाशयश्चेति त्रयाणां श्लेष्मस्थानानां मध्ये आमाशयस्य न भवति शून्यता, उरःशिरसोस्तु स्वाभाविक स्नेहनतर्पणश्लेष्मक्षयाद् भवत्येवेत्यभिप्रायः । नन्वामाशयेऽपि क्लेदनश्लेष्मणोऽल्पत्वाच्छून्यतैव स्यादिति चेत्, उच्यते । तृष्णाधिक्येन जलादिपानाधिक्यात् तत्र प्रायः पूर्णतैव स्यादिति विचार्य्यैवाहुरन्यत्वामाशयादिति । सन्धिशैथिल्यं सन्ध्यन्तःस्थितश्लेषधरकलासु श्लेषकश्लेष्मणोऽल्पत्वात् । तदेतल्लिङ्गषट्कं सामान्यादवगन्तव्यं, विशेषतस्तु बल-वृषता-स्थैर्य्यादिह्रासोऽपि समुन्नेयः ।

अथ वृद्धिलिङ्गान्याह पुनः सौश्रुतवचोऽनुवादेनैव— वातवृद्धाविति । वातवृद्धौ वायुप्रकोपे सति त्वचः परुषता रूक्षता, कार्श्यं कृशता शरीरस्य । कृष्णता श्यामाभता विशेषतः नखचर्म्मणाम् । गात्राणां स्फुटनमङ्गमर्दः । उष्णकामिता वायोः स्वाभाविकशैत्याधिक्यप्रतीकाराय उष्णाशनवसनादेराकांक्षा । गाढवर्चस्त्वं पुरीषस्य कठिनीभावः । एवमादि चेत्यन्येषामसंख्यानां वातवृद्धिलिङ्गानां ग्रहणम् । तथाहि तद्विस्तरवर्णनपरं सुदान्तसेनकृतं प्राचीनपद्यद्वयम्— "आध्मानस्तम्भरौक्ष्यस्फुटनविमथनक्षोभकम्पप्रतोदाः, कण्ठध्वंसावसादौ श्रमकविलपनं स्रंसशूलप्रभेदाः । पारुष्यं कर्णनादो विषयपरिणतिभ्रंशदृष्टिप्रमोहाः, विस्पन्दोद्वर्त्तनानि स्वपनमशयनं ताडनं पीडनञ्च ॥ नामोन्नामौ विषादो भ्रमपरिपतनं जृम्भणं

"निदानार्थकरो रोगो रोगस्याप्युपलभ्यते।"

स्वयं शाम्यति तिष्ठेद्वा, बहुधा रोगसङ्कराः ॥ १२ ॥

संसर्गे कुपितः क्रुद्धं दोषं दोषोऽनुधावति"—इति (सु० सू० २१ अ०) चिकित्साक्रमापदेशश्च तत्रैव यथा—"संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत्। शेषदोषाविरोधेन सन्निपाते तथैव च॥" इति। विकल्पविशेषः स्थानान्तराश्रयेण च संभवन्तो रोगविशेषाश्च चरके कियन्तःशिरसीयाध्याये—"प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये। स्थानादादाय गात्रेषु यत्र यत्र प्रसर्पति। तदा भेदश्च दाहश्च तत्र तत्रानवस्थितः। गात्रदेशे भवेत्तस्य श्रमो दौर्बल्यमेव च"—इत्यादिसन्दर्भेन प्रतिपादिता नेह विस्तरभयाल्लिखिताः। प्राधान्यं—व्याधिसङ्करे जाते सोपद्रवे बहुलिङ्गे वा व्याधौ एकस्य प्रधानता अन्यस्य अनुषङ्गमात्रता—यथा वातश्लेष्मज्वरे कासप्रतिश्यायादीनामप्रधानता ज्वरस्यैव प्रधानता। क्षयरोगे तु ज्वरादीनां सर्वेषामप्रधानता क्षयस्यैव फुसफुसक्षतस्य वा प्रधानता। एवं जीर्णग्रहण्यां ज्वरे जाते ग्रहण्याः प्रधानता ज्वरस्याप्रधानता। बलं—व्याधेः सर्वसम्पूर्णलक्षणत्वे पूर्णबलं, मध्यमलक्षणत्वे मध्यबलमित्येवमादि। कालः—वयोऽहोरात्रि भुक्तानामन्त्यमध्यादिक्रमेण षडृतुविभागेन च वातादीनां क्षयवृद्धिदर्शनात् प्रतिनियतो ह्रासवृद्धिनिरूपितो व्याधिकालः। तत्र वयोऽनुसारेण यथा—वार्द्धके वायुर्वर्द्धते, यौवने पित्तं, बाल्ये कफः। अह्नः—शेषे वायुर्मध्ये पित्तमादौ कफः। एवं रात्रेरपि। भुक्तस्य—अन्ते जीर्णप्रायेऽन्ने वायुः, मध्ये पच्यमानेऽन्ने पित्तमादौ भुक्तमात्रे कफः। एवमृतुष्वपि यथा वर्षासु वायुः, शरदि पित्तं, वसन्ते श्लेष्मेति। तदेवं कालादिषु नियमेन वर्द्धमानो हीयमानो वा व्याधिर्वातिकादिप्रकारकसम्प्राप्त्या बोद्धव्यः। ननु चरके विधिरप्युक्तः, स कथमिह नोच्यते? सत्यं, संख्यायामन्तर्भावेन लाघवान्नोक्तः। विधिर्हि गत्यादिहेतुविशेषमाश्रित्य एकजातीयेषु प्रवर्त्तमानो विभागः—यथा द्विविधं रक्तपित्तमूर्द्धगमधोगञ्चेति। संख्या तु दोषभेदेन जातिभेदेन चेति चरकाभिप्रायः। इह तु यं कञ्चिद् विभागहेतुमाश्रित्य प्रवर्त्तमानाः सर्वेऽपि भेदाः संख्यापदार्थेऽन्तर्भाविता इति लाघवम्। विभागहेतुदृष्टान्ताश्च यथा उपक्रमसौकर्य्यहेतुको विभागो—व्याधीनां साध्यासाध्यमृदुदारुणभेदेन; निदानहेतुको विभागः—निजागन्तुभेदेन; दोषहेतुको विभागः—यथा अष्टौ ज्वरा इत्यादि। तदेतदशेषविशेषप्रकारकोपलक्षितो व्याधिजन्मावस्थाविशेषः सम्प्राप्तिर्भिषजा सर्वथाऽवश्यं ज्ञातव्या, रोगतत्त्वपरिज्ञानाय चिकित्सामार्गाविष्करणाय चेति तत्त्वम्।

अथ निदानपञ्चकमभिधाय रोगाणामपि कदाचित्कं निदानत्वं रोगसङ्करांश्च

"स एव कुपितो दोषः समुत्थानविशेषतः।
स्थानान्तरगतश्चैव जनयत्यामयान् बहून्॥" १३॥

दर्शयति—**निदानेति** चरकीयवचनेन। एको रोगोऽन्यस्य रोगस्य निदानार्थकरः स्वयं निदानं न भवन्नपि निदानार्थं रोगोत्पादनं कुर्वन्नुपलभ्यते दृश्यते। नन्वेवं सामान्यविशिष्टनिदानाभ्यामतिरिक्तमिदं निदानमपरमिति चेत्, न। सत्येकस्मिन् दृढमूले रोगे तद्दुर्बलशरीरस्य पुरुषस्य स्वल्पेनापि पुनर्निदानसंयोगेन भूयः प्रकुपितैः प्रायस्तैरेव दोषैर्जन्यतेऽपरो रोगः, तेन पररोगं प्रति पूर्वरोगस्य परम्परयैव कारणता न साक्षात्, कुलालपितुर्घटं प्रति कारणतावत्। अतएवोक्तं महर्षिणा 'निदानार्थकर' इति। स चैवं निदानार्थं कुर्वन् रोगः स्वयं शाम्यति विलीनप्रायो भवति, क्वचित्तिष्ठेद्वा—इति विचित्र एव रोगेण रोगस्य सम्बन्धः। अतएवोपसंहरति—"बहुधा रोगसङ्कराः" इति। रोगाणां परस्परमिश्रीभावा नानाप्रकारा इत्यर्थः। तद्दृष्टान्ताश्च चरके यथा—"ज्वरसन्तापाद्रक्तपित्तमुदीर्य्यते। रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युपजायते। प्लीहाभिवृद्ध्या जठरं जठराच्छोफ एव च। अर्शोभ्यो जठरं दुःखं गुल्मश्चाप्युपजायते। प्रतिश्यायादथो कासः कासात् संजायते क्षयः। क्षयोरोगस्य हेतुत्वे शोषश्चाप्युपजायते। ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः। उभयार्थकरा दृष्टास्तथैवैकार्थकारिणः। कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति। न प्रशाम्यति चाप्यन्यो हेतुत्वं कुरुतेऽपि च। एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसङ्कराः॥" इति (च० नि० ८ अ०)। प्रयोजनञ्च व्याधिसङ्करविज्ञानस्य रोगाणां स्वातन्त्र्यपारतन्त्र्यादिविनिर्णयेन चिकित्सापथाविष्करणमिति दिक्।

अथ सम्प्राप्तिभेदेन जायमानानां रोगाणामानन्त्यं समासेन प्रतिपादयन्नाह पुनश्चरकीयवचनेन—**स एवेति**। स एव, समान एव दोषो वातादिः। एकवचनमतन्त्रं, तेनैको दोषो द्वौ वा दोषौ त्रयो वा दोषा इत्यभिप्रायः। कुपितः क्रुद्धः सन्, उपलक्षणात् क्षीणोऽपि। समुत्थानविशेषतो निदानवैशेष्यात्। स्थानान्तरगतो नानाविधस्थानसंश्रयं कुर्वंश्च। एतेन स्थानसंश्रयभेदकृतानि लिङ्गानि व्याख्यातानि। चकारात् विकल्पविशेषैर्भिन्नलक्षणश्च। बहूनामयान् नानाविधान् रोगान् जनयति। तत्र समुत्थानविशेषतो यथा विजयाधूस्तुरयोर्वातप्रकोपनत्वे तुल्येऽपि तत्कृतलक्षणानां भूयान् प्रभेदः। एवं स्थानभेदाद् यथा कुपितो वायुः कण्ठगतः स्वरभेदादिमन्त्रगतश्च शूलानाहादिं जनयतीत्येवमादि पूर्व्वमुक्तं, तद्विस्तरश्च चरके त्रिशोथीयाध्याये द्रष्टव्यः। स्थानसंश्रयेण सम्भवन्तो रोगाश्च चरके कियन्तःशिरसीयेऽवलोकनीयाः।

"तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च।
समुत्थानविशेषांश्च बुद्धा कर्म्म समाचरेत्॥" १४॥
"यो ह्येतत्त्रिविधं ज्ञात्वा कर्म्माण्यारभते भिषक्।
ज्ञानपूर्व्वं यथान्यायं स कर्म्मसु न मुह्यति॥" १५॥

अथोपसंहरति चरकीयवचनेन **तस्मादिति**। तस्मात् यतो दुर्व्विज्ञेया रोगाणामशेषविशेषप्रकारास्ततो हेतोः। विकारप्रकृतीः रोगस्वभावान्—किमाख्योऽयं रोगः, कतमजातीयः, कदा ह्रासवृद्धिशीलः, किमुपशयः, केन रोगेण कथङ्कारं संकीर्णः, साध्यो याप्यः प्रत्याख्येयो वा—इत्येवमादीन् विशेषान्। अधिष्ठानान्तराणि अधिष्ठानानां रोगाश्रयाणामाशयादीनामन्तराणि अवधिविशेषान्। "अन्तरमवकाशावधिपरिधानान्तर्द्धितादर्थे"—इत्यमरः। एतेन दोषगतिविशेषाः रोगमार्गाश्चोक्ताः। तथाहि चरके,—"क्षयः स्थानञ्च वृद्धिश्च विज्ञेया त्रिविधा गतिः। त्रिविधा चापरा कोष्ठ-शाखा-मर्म्मास्थिसन्धिषु" इति। समुत्थानानि निदानानि रोगोत्पादकवाह्य-निमित्तानि। तेषां विशेषान् निमित्तनैमित्तिकसम्बन्धविज्ञातान् प्रकारान्। तदुक्तं—"एको हेतुरनेकस्य तथैकस्यैक एव हि। व्याधेरेकस्य चानेको बहूनां बहवोऽपि च॥ ज्वरभ्रमप्रलापाद्या दृश्यन्ते रूक्षहेतुजाः। रूक्षेणैकेन वाप्येको ज्वर एवोपजायते॥ हेतुभिर्वहुभिश्चैको ज्वरो रूक्षादिभिर्भवेत्। रूक्षादिभिर्ज्वराद्याश्च व्याधयः सम्भवन्ति हि॥" इति (च० नि० ८ अ०)। तानेतान् विशेषान् बुद्धा सम्यङ् निरूप्य कर्म्म समाचरेत् चिकित्सामारभेत, न तु पाणिचाराज्ञातभीतवत् किञ्चिन्मात्रदर्शी चिकित्सायां प्रवर्त्तेत—इत्यभिसन्धिः।

अथ विकारादीनां सम्यक् परिज्ञाने फलमाह चरकवचनेनैव—**यो हीति**। यः खलु भिषगेतत् पूर्व्वोक्तं विकारप्रकृत्यादित्रयं, ज्ञानपूर्व्वं शास्त्रोपदेश-वृंहितानुभवपूर्व्वं, तथा यथान्यायं सम्यग् युक्त्यनुसारतश्च, ज्ञात्वा कर्म्माणि आरभते चिकित्सायां प्रवर्त्तते, स कर्म्मसु रोगोपशमादिफलकेषु वमनविरेचनादि-प्रयोगेषु न मुह्यति मूढ़वन्नापथे गच्छति। ज्ञानपूर्वं यथान्यायमिति विशेषणद्वयं शास्त्रानुगत्या स्वविवेकस्यापि प्रयोजनमाविष्करोति। तदुक्तं वाग्भटेन—"अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान्। वर्ज्जयेत्तान् भिषक्पाशान् पाशान् वैवस्वतानिव।" इति—(अष्टाङ्ग सं० उत्तर ४० अ०)।

इति—
श्रीगणनाथ सेन भिषजः कृतौ
सिद्धान्तनिदाने
व्याधिविज्ञानाख्यो—द्वितीयोऽध्यायः।

# अथ तृतीयोऽध्यायः।

## रोगपरीक्षा।

दर्शनस्पर्शनप्रश्नैर्विज्ञायन्तां त्रिभिर्गदाः।
इति केचिन्न सम्यक् तत्, साधनं षड्विधं यतः ॥१॥
श्रोत्र-त्वङ्-नेत्र-रसना-घ्राण-प्रश्नैः प्रयोजितैः।
यथाज्ञानं परीक्षेति धन्वन्तरिरभाषत ॥ २ ॥
तत्र श्रौत्री परीक्षा स्यादुरोरोगेषु तद्यथा।
उरसि श्रूयते वायुः सश्लेष्मा बुद्बुदायितः ॥ ३ ॥

अथ व्याधिविज्ञानमार्गमादौ दर्शयित्वा व्याधिविज्ञानोपायानुपवर्णयति—**दर्शनेति**। एष सौश्रुतसन्दर्भस्यानुवादः। दर्शनं दृश्यानां विशेषाणामातुरे प्रत्यक्षीकरणम्। स्पर्शनं यकृत्प्लीहादीनामङ्गुष्ठमूलगाया धमन्याश्च। प्रश्नाः—रोगोऽयं कदा किंलक्षणः प्रादुर्भूत इत्येवमादयः।—इति त्रिभिरुपायैर्गदा रोगा विज्ञायन्तामिति केचित्। तत्तु न सम्यक्, यतः साधनं रोगविज्ञानकरणं षड्विधमग्रे वक्ष्यते। नन्वेवमालोकादीनामपि साधनताऽस्तु, इति चेन्न। सर्वसामान्यात्। समानं हि तावदालोकादिकं सर्वेषाम्। इह तु परीक्षकनिष्ठविशिष्टसाधनानामेवोपयोगः।

धन्वन्तरिमतमाह—**श्रोत्रे ति**। श्रोत्रं श्रवणेन्द्रियं, त्वक् स्पर्शनेन्द्रियं, रसना जिह्वा, घ्राणं घ्राणेन्द्रियम्, प्रश्नाः पूर्वोक्ता वागिन्द्रियप्रयुक्ताः। यथाज्ञानमिति गुरूपदेशसहकृतस्वानुभवानुमानादित्यभिप्रायः। धन्वन्तरिरभाषतेति धान्वन्तरीयसम्प्रदायस्य मतमेतत्। आत्रेयसाम्प्रदायिकास्तु रासनप्रत्यक्षं निषेधन्ति। यथाह चरकः—"प्रत्यक्षतस्तु खलु रोगतत्त्वं बुभुत्समानः सर्वैरिन्द्रियैः सर्वानिन्द्रियार्थानातुरगतान् परीक्षेत, अन्यत्र रसज्ञानात्" इति (च० वि० ४अ०)। इह ग्रन्थकृतापि रासनी परीक्षा निषिद्धैव।

तत्र श्रावणं प्रत्यक्षमाह—**तत्रे ति**। उरोरोगेष्वित्युपलक्षणम्, अन्त्रकूजनस्वरभङ्गादीनामपि श्रावणमेव प्रत्यक्षं भवति। उरोरोगाः फुसफुस-हृद्यन्त्रादिरोगाः। तत्रैको दृष्टान्तः यथा—श्वासमार्गेषु श्लेष्मणा किञ्चिदावृतमार्गः श्वासवायुर्जलबुद्बुदशब्दं कुर्वन् श्रूयते। अपरे दृष्टान्तास्तु यथा—तमकश्वासे वंशीध्वनिवच्छब्दः, हृद्रोगेषु नाड़ीधमनवद् ध्वनिरित्येवमादयो गुरुवक्त्रगम्याः। श्रवणञ्च तद् द्विविधम्। साक्षाद् दूरत एव—यथा श्वासादिरोगे कण्ठस्थो घुर्घुरशब्दः। समीपतो वा—यथा कर्णसंयोगेन। कर्णसंयोगश्च नाड़ीयन्त्रसहकृतः केवलो वा।

**त्वाची परीक्षा शीतोष्ण-धमनीगतिबोधिनी।**
**यकृत्प्लीहादिसंस्थानसूचनार्थाऽपि सोच्यते॥ ४॥**
**चाक्षुषी तु भवेद् वर्णोपचयादिप्रदर्शिनी।**

इदानीन्तनानान्तु नाड़ीयन्त्रविशेषसहकृत एव श्रेयान्, सौकर्य्यात्। स च नाड़ीयन्त्रविशेषः सुश्रुतोक्तनाड़ीयन्त्रेष्वन्तर्भाव्यः[1]। इयञ्च फुम्फुसरोगादीनां श्रावण-प्रत्यक्षविषयता सुश्रुतेऽप्युक्ता—यथा "सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छतीत्येवमादयः श्रवणेन्द्रियविज्ञेयाः" इति (सु॰ सूत्र॰ १० अ॰)। न च शङ्क्यं, व्रणास्रावादिविज्ञानमेव सुश्रुतसन्दर्भस्य विषयस्तेन शल्यतान्त्रिकाणामेव श्रावणपरीक्षोपदेश इति। कायचिकित्साविषयाणां क्षतजकासोरःक्षतादीनामपि व्रणत्वसामान्यात्, अव्रणेष्वपि श्वासरोगादिषु श्लेष्मसञ्चयादिविज्ञानार्थं श्रावणपरीक्षाया आवश्यकत्वाच्च।

स्पर्शनेन्द्रियप्रत्यक्षमाह—**त्वाचीति**। शीतोष्णयोरनुभवो यथा ज्वरादिषु। उपलक्षणात् खरश्लक्ष्णादीनामपि त्वग्रोगादिषु। धमनीगतिरङ्गुष्ठमूलस्थायाः जीवसाक्षिण्या धमन्याः स्पन्दनम् नाड़ीगतिरिति लोकप्रसिद्धम्॥ सा चान्याश्च सर्वा धमन्यो हृदयप्रभवाः। हृदयं हि धमनीद्वारेण सर्वत्र शरीरे शोणितं धमति, यच्च हृदयस्य स्पन्दनं तदेव वेगप्रतिसंक्रान्तं धमन्यामनुभूयते। तत्र पुनरिमे विशेषा लक्षणीयाः संक्षेपात्—गतिः, यतिः, आकृतिः, संहतिश्च। तत्र गतिर्नाम वेगः, यद्भेदेन नाड़ी मन्दा द्रुता वा भवति। यतिः स्पन्दनानां समान्तरालता विषमान्तरालता वा, यद्भेदेन नाड़ी समा विषमा वा भवति हंससर्पादिगतिश्च कथ्यते। आकृतिः स्थूलकृशयोरन्यतरा यथा सामावस्थायां नाड़ी स्थूला पुष्टा वानुभूयते, निरामावस्थायान्तु कृशा क्षीणा वा। संहतिः, अङ्गुल्या धमन्यां निष्पीड़ने कोमलतया कठिनतया वाऽनुभवः। तदेतच्चतुष्टयं नानाविध-विकल्पैर्भिद्यमानमनेकानुभवविशेषेषु पर्य्यवस्यति। ते च विशेषाः गुरूपदेशानुभवाभ्यां संवेद्याः प्रतिपादिताश्चास्मदीये निदानप्रदीपाख्ये ग्रन्थे।

अङ्गुलीचेष्टादिसहकृतां त्वाचीं परीक्षां पुनर्विशिष्याह—**यकृत्प्लीहादीति**। सा त्वाची परीक्षा यकृत्प्लीहादीनां संस्थानविशेषसूचनार्थाऽपि। यकृत्प्लीहादीनां कियती वृद्धिः, कीदृशं काठिन्यमित्यादिबोधो हि तत्तदवयवानामङ्गुल्यादिभिः पीड़नेन भवतीति चेष्टाविशेषसहकृता त्वाचीयं परीक्षेति विशेषः।

चाक्षुषीं परीक्षामाह—**चाक्षुषीति**। चाक्षुषी दर्शनेन्द्रियकृता या परीक्षा सा, वर्णं कृष्णगौरपीतादिं, उपचयं शरीरपुष्टिं, आदिपदात् व्रणेषु

[1] Stethoscope.

**प्रमेहादिरसज्ञाने रासनी, सा न शस्यते ॥ ५ ॥**
**माधुर्य्यादिपरिज्ञानसाधने बहुधा स्थिते ।**
**कोऽधुना नु प्रयुञ्जीत जिह्वां मूत्रपरीक्षणे ॥ ६ ॥**
**घ्राणेन ज्ञायते गन्धः श्लेष्मपूयासृगादिषु ।**
**प्रश्नैस्तु विद्यादखिलं रोगवृत्तान्तमादितः ॥ ७ ॥**

---

उत्सेधादिञ्च प्रदर्शयति । तत्र जिह्वा-मल-मूत्रादिपरीक्षापि चाक्षुषी परीक्षैव । सा च द्विविधा—केवला यन्त्रादिसहकृता च । तत्र केवला न केवलं जीवच्छरीरस्य किन्तु रोगमृतस्यापि आभ्यन्तरयन्त्रादिविकृतिदर्शननिष्पाद्या संस्कारदार्ढ्यार्थो तत्त्वाविष्करणार्था च यथा—यक्ष्मिणः फुस्फुसविकृतिः । यन्त्रादिसहकृता तु अणुवीक्षणादिसहाया यथा शोणितश्लेष्मादिपरीक्षा ।

अथ रासनीं परीक्षां निर्दिश्य निषेधति—**प्रमेहेति** । रासनी परीक्षा प्रमेहादिरसज्ञाने मूत्रमाधुर्य्यादिपरिज्ञाने इत्यभिसन्धिः । तदेतत् सुश्रुतमतम् । तथाह्युक्तं—"रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः ।" ( सु० सूत्र० १० अ० ) इति । सा न शस्यते न प्रशस्ता, जुगुप्सितत्वात् परीक्षितुर्व्याधिकारित्वात् प्रशस्यतरपरीक्षासद्भावाच्च—इत्याकूतम् । तदेवाह—**माधुर्य्यादीति** । माधुर्य्यादिपरिज्ञानसाधने नवाविष्कृतपाश्चात्यपरीक्षाविधौ । स च परीक्षाविधिः द्वित्रद्रव्यसंयोगेन वर्णान्तरपरिणामादुपदिष्टः प्रतिपादितश्चास्माभिर्निदानप्रदीपे ।

घ्राणकृतां परीक्षामाह—**घ्राणेनेति** । श्लेष्मा पूयम्, असृग्रक्तञ्च, आदिपदात् मलमूत्रादयः । तेषु गन्धविशेषाः प्रायेण दूरादपि किञ्चित् सन्निकर्षेण वा ज्ञायन्ते । तत्र दुर्गन्धः कुणपगन्धिर्वा श्लेष्मादिविकृतिविशेषं बोधयतीति सार्व्वजनिकमेतत् । सुश्रुतेऽप्युक्तम्—"घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानाञ्च गन्धविशेषाः" इति ( सु० सूत्र० १० अ० ) । उक्तञ्चान्यत्र—"दुर्गन्धं हरितं श्यावमित्यादि ।"

अथ प्राश्नीं परीक्षामाह—**प्रश्नैरिति** । आदितो रोगारम्भात् प्रभृति । अखिलं सर्व्वम् । तथाच सुश्रुतः—"प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलमन्तरग्निं वातमूत्रपुरीषाणां प्रवृत्त्यप्रवृत्ती कालप्रकर्षादींश्च विशेषान्" इति ( सु० सूत्र० १० अ० ) ।

तदेवं सत्स्वपि षट्सु परीक्षाविधिषु रासनपरीक्षाया वर्ज्जनात् पञ्चविधैव परीक्षा वैद्यैः करणीयेति चरकानुगत एव सिद्धान्तः पर्य्यवसित इत्यलं पल्लवितेन ।

---

१ Microscope.  २ Urine Analysis.

इत्थं निखिलवृत्तान्तसम्यग्ज्ञानपरायणः।
स्वातन्त्र्यं पारतन्त्र्यञ्च साङ्कर्य्यञ्च रुजां विदन्।
निश्चिन्वानोऽथ सम्प्राप्तिं सम्पूर्णाङ्गां प्रयत्नतः।
प्रयुञ्जानः क्रियाः सम्यग् भिषग् याति यशस्विताम् ॥८॥९॥
"शास्त्रं ज्योतिः प्रकाशार्थं दर्शनं बुद्धिरात्मनः।
ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन् नापराध्यति ॥"१०॥
"आतुरस्यान्तरात्मानं यो नाविशति रोगवित्।
ज्ञानबुद्धिप्रदीपेन न स रोगान् चिकित्सति ॥" ११ ॥

अथोपसंहरति —**इत्थमिति**। इत्थं परीक्षाविधिपञ्चकेन। स्वातन्त्र्यादि पूर्व्वं व्याख्यातम्। निखिलवृत्तान्ताभिज्ञानं स्वातन्त्र्यादिपरिज्ञानञ्च चिकित्सायां बहूपकरोति। तदनभिज्ञस्तु भिषगसम्यग्दर्शी रोगमूलमस्पृशन्नुपद्रवमात्रं वा लक्षणमात्रं वा उपक्रमते, अयशश्च प्राप्नोति। उक्तञ्च सुश्रुते—"मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैव च। तथा दुःपरिमृष्टाश्च मोहयेयुश्चिकित्सकम्।"—इति। सम्पूर्णाङ्गां 'असुमाशय'मित्याद्यशेषविशेषप्रकाराम्। क्रियाः चिकित्साविधीन्। सम्यगिति शास्त्रयुक्तियुक्तोपक्रमस्यैव कर्त्तव्यतामुपदिशति। तदुक्तं —"या ह्युदीर्णं शमयति नान्यं रोगं करोति च। सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत्" —इति।

अथ स्थूणानिखननन्यायेन रोगविज्ञानस्य अतिमात्रोपयोगित्वं पुनर्दर्शयति चरकीयश्लोकाभ्याम्—**शास्त्रमिति**। (च० सूत्र० ९अ०) आलोकचक्षुःसंयोगेन हि रूपाभिव्यक्तिर्यथा भवति तथा दुर्विज्ञेयेष्वपि रोगतत्त्वेषु शास्त्रोपदेशविवेकाभ्यां सर्वार्थसिद्धिरित्यभिसन्धिः। शास्त्रं ज्योतिरालोकवदिति भावः। आत्मनो बुद्धिर्दर्शनं चक्षुर्वत्। सुयुक्ताभ्यां प्रत्यक्षादिसहायाभ्याम्। नापराध्यतीति अन्यथाप्राप्तमपराधशङ्कां निवर्त्तयति। उक्तञ्च —"आतुराय शयानाय श्रद्दधानाय रोगिणे। यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति। त्यक्तधर्म्मस्य पापस्य मृत्युभूतस्य दुर्म्मतेः। नरो नरकपाती स्यात्तस्य सम्भाषणादपि॥" इति—

**आतुरस्येति**। (च० वि० ४अ०) यथाहि कस्मिंश्चिदन्धकारमये गृहे प्रदीपं विना प्रविशन् पुरुषो नार्थमभिमतमासादयति स्खलति च प्रायेण पदे पदे, तद्वदिति भावः। उक्तञ्च —"यस्तु रोगमविज्ञाय कर्म्माण्यारभते भिषक्। अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया। यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः। देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशयम्॥" (च० सूत्र० २०अ०) इति—

श्रीगणनाथ सेन भिषजः कृतौ,
सिद्धान्तनिदाने रोगपरीक्षाभिधस्तृतीयोऽध्यायः॥

# अथ चतुर्थोऽध्यायः ।

## ज्वरनिदानम् ।

**ज्वरः प्रधानो रोगाणां त्वचि सन्तापलक्षणः ।
देहेन्द्रियमनस्तापो निजश्चागन्तुजश्च सः ॥**

अथ ज्वरस्य सर्वरोगाग्रजत्वात्तन्निदानमेवादावुपक्रमते—**ज्वर इति** । रोगाणां मध्ये ज्वरः प्रधानः प्राधान्येन ज्ञातव्यः सर्वधातुक्षयापादकत्वात् सर्वरोगपूर्वजत्वाद् जन्ममरणयोरवश्यम्भावित्वाद् निखिलस्थावरजङ्गमविषयत्वाच्च । ननु यक्ष्मादिषु ज्वरो लिङ्गमात्रं न स्वतन्त्रो व्याधिरिति कथं ज्वरस्य प्रधानतोच्यते ? सत्यं, केषुचिद्रोगेषु ज्वरो लिङ्गमेव तथापि प्रायः सर्वरोगाणां ज्वरपूर्वत्वात् सर्पाणामिव ज्वराणामप्यसंख्यजातीयत्वाच्च तस्य प्रधानता न प्रतिहन्यते । यक्ष्मादिष्वपि प्रवृद्धज्वरविशेषस्य "प्रलेपक"संज्ञाभिधेयस्तदुपक्रमोऽपि विशेषात् करणीयो भवत्येव । अथासौ ज्वरो बहुधा भिन्नरूपोऽपि मूलत एक एवेत्याह चरकानुगामनेन—त्वचि सन्तापलक्षण इति । तथाह्युक्तं "ज्वरस्त्वेक एव सन्तापलक्षणः" इति (च० नि० १अ) । अथ रौद्रातिसेवयापि क्षणिकस्त्वक्सन्तापो दृष्ट इति तद्वारणार्थं विशिनष्टि—देहेन्द्रियमनस्तापेति । न च देहग्रहणादेव त्वग्ग्रहणमिति पौनरुक्त्यं शङ्क्यं, विशेषप्रतिपत्तेः । त्वग्गतसन्तापविशेषो हि सर्वजनैः संवेद्यः, इतरे सन्तापास्तु रोगिवैद्याभ्यामेव । देहपदेन सामान्यतः सर्वधातूनां ग्रहणात् । स च ज्वरः सामान्याद्द्विविधः निजो दोषकृतः, आगन्तुज आगन्तुहेतुकोऽभिघातादिनिमित्तः । एवमग्रे सर्वरोगेष्वपि सामान्याद्द्विविधो विभागो द्रष्टव्यः । यदाहुः "द्विविधा प्रकृतिरेषामागन्तुनिजविभागादिति" (च० सू० २० अ) । वस्तुतस्तु ज्वरे दोषकृतभेदाद् धातु-काल-जात्यादिकृतो भेद एव गरीयान् । अतएव चरकश्चिकित्सिते ज्वरस्य पूर्वरूपमात्रमभिधाय विध्यादिकृतानेव भेदान् प्रधानतो व्याचष्टे तेषामेव चिकित्सायां परमोपयोगित्वात् यथा—"द्विविधो विधिभेदेन ज्वरः शारीरमानसः । पुनश्च द्विविधो दृष्टः सौम्यश्चाग्नेय एव च । अन्तर्वेगो बहिर्वेगो द्विविधः पुनरुच्यते । प्राकृतो वैकृतश्चैव साध्यश्चासाध्य एव च । पुनः पञ्चविधो दृष्टो दोषकालबलाबलात् । सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ । पुनराश्रयभेदेन धातूनां सप्तधा मतः । भिन्नः कारणभेदेन पुनरष्टविधो ज्वरः" इति (च० चि० ३अ) ।

(१) तथाहि चरके—"तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि । जन्मादौ निधने च त्वमपि चावान्तरेषु च ॥" इति (च० चि० १अ०) । (२) तथाचाश्ववैद्यके—"पाकलः स तु नागानामभितापस्तु वाजिनाम् । गवामीश्वरसञ्च मानवानां ज्वरो मतः । अजावीनां प्रलापाख्यः करभे चालसौ भवेत् । हारिद्रो महिषाणान्तु मृगरोगो मृगेषु च । पक्षिणामभिघातस्तु मत्स्येष्विन्द्रमदो मतः । पक्षपातः पतङ्गानां व्यालेष्वक्षिकसंज्ञकः" इत्यादि । अन्यत्रोक्तं "जलस्य नीलिका भूमेरूषरो वृक्षस्य कोटरः"—इत्यादि ।

[ अथ—निजज्वराः ]

( निदानम् )

मिथ्याहारविहारादि निजस्यायतनं स्मृतम्।

( सम्प्राप्तिः )

संसृष्टाः सन्निपतिताः पृथग् वा कुपिता मलाः।
रसाख्यं धातुमन्वेत्य पक्तिं स्थानान्निरस्य च॥
स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम्।
स्रोतांसि रुद्ध्वा सम्प्राप्ताः केवलं देहमुल्बणाः॥

---

अथ निजज्वराणां निदानमाह—**मिथ्याहारेति**। अभ्यस्तानामायतिसुखानामाहारविहाराणां वैपरीत्यं मिथ्यात्वम्। निजस्य निजज्वरस्य। जातावेकवचनम्। आयतनं निदानम्। "निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः। निदानमाहुः पर्य्यायैः"—इत्युक्तेः॥

ननु श्रूयते, "दक्षापमानसंक्रुद्धरुद्रनिश्वास" एव ज्वरस्याद्यो हेतुरिति, स कथं नोक्तः? उच्यते, अस्माकं खल्विह लौकिकैरिव हेतुभिः प्रयोजनं नालौकिकैस्तेन तृप्यन्तु पुराणपरायणाः पौराणिक्या वार्त्तयेति तादृशं निमित्तं नोक्तम्। केचित्त्वाहुः—'क्रोधात्पित्त'मिति चरकीयवचनेन सर्व्वज्वरे पित्तविरोधिनी क्रिया कार्य्येत्यनेन सूच्यते—इति। उपन्यस्यन्ति चेह वागभटवचनं,—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिक"मिति। अन्ये तु रुद्रकोपसम्भूतत्वाज्ज्वरस्य देवत्वं मूर्त्तित्वञ्च कल्पयन्तः पूजनमप्युपदिशन्ति। अपरे तु सूक्ष्मदृशः समादधुः—दक्षो हि भगवान् वायुस्तस्यापमानो वैषम्यापादकं कर्म्म, तेन संक्रुद्धो रुद्रः पाचकाग्निस्तस्य निःश्वासो वह्निनिःक्षेपस्ततस्सम्भवो ज्वर इत्यभिसन्धिरिति।

अथ निजज्वराणां सम्प्राप्तिमाह चरकवचनैः—**संसृष्टा** इति। (च० चि० ३ अ०) मलाः दोषा वातपित्तकफाः। संसृष्टा द्वाभ्यां द्वाभ्यामवस्थिता यथा—वातश्लेष्माणौ पित्तश्लेष्माणौ वातपित्ते चेति। पृथगेकैकशो वा कुपिताः क्रुद्धाः सन्तः। बहुवचनमतन्त्रम्। तेनैको दोषः द्वौ वा दोषौ त्रयो वा दोषा इति योजना। रसाख्यं धातुमन्वेत्य अनुगम्य। अन्नस्य सारभूतो धातुरामाशयादन्त्रेभ्यश्चाकृष्यमाणो यकृद्द्वारेण रक्तस्रोतःसञ्चारी रस इत्युच्यते। तदनुगमनञ्च दोषाणां रसायनीः प्रपद्यैव। तदुक्तं वागभटेन—"प्रतिरोगमिति क्रुद्धा रोगाधिष्ठान-

सन्तापमधिकं देहे जनयन्ति नरस्तदा।
भवत्यत्युष्णसर्व्वाङ्गो ज्वरितस्तेन चोच्यते॥

---

गामिनी:। रसायनी: प्रपद्याशु दोषा देहे विकुर्व्वते"। (अष्टाङ्गहृ० नि० १ अ०)। दोषोत्थानञ्चामाशयादित एव सम्भवति, तस्मादामाशये पक्वाशये वा निजज्वराणां मूलमन्वेष्यमित्यभिप्राय:। अतएवाग्निवेशनिदाने—"दोषोऽजीर्णाज्ज्वरं कुर्य्यादिति"। यत्तु सुश्रुतेनोक्तं—"दुष्टा: स्वहेतुभिर्दोषा: प्राप्यामाशयमूष्मणे"त्यादि, तत्रामाशय इति आमपक्वाशययोरुपलक्षणं बोध्यम्। आमाशयसमुत्थस्य पक्वाशयसमुत्थस्य चेति द्विविधज्वरस्य शास्त्रयुक्तिसिद्धत्वात्। पक्तिं पाचकाग्निं स्थानात् स्वाधिष्ठानात् समग्रादन्नवहमार्गात्. निरस्य बहिस्त्वचि नि:क्षिप्य। एतेन निजज्वरेषु लङ्घनप्रयोजनं सूचितम्। तेन बहिर्नि:क्षिप्तेन स्वेनोष्मणा पाचकाग्निसन्तापेन देहोष्मण: स्वाभाविकस्य सर्व्वधात्वग्निसन्तापात्मकस्य बलं बलवृद्धिं कृत्वा। स्रोतांसि स्वेदादिमार्गान् रुद्ध्वा आमरसबाहुल्यादाभ्यन्तरसन्तापाधिक्याच्च स्वेदादिरोधं कृत्वा। केवलं देहं सर्व्वं कायं सम्प्राप्ता:। उल्वणा धातुक्षयकारित्वेन प्रज्वलन्त इव। देहे बहिस्त्वचि धातूनामभ्यन्तरतश्चाधिकं सन्तापं जनयन्ति। तेन सर्व्वधातूनां दह्यमानत्वेनात्युष्णसर्व्वाङ्गो नरो ज्वरित उच्यते। तदिदं सम्प्राप्तिवर्णनमात्रं न लक्षणम्। लक्षणन्तु सामान्यात् सन्तापाधिक्यमिति पूर्व्वमवोचाम। इदञ्चात्रावधेयम्—यावद् यावन्मात्रं सन्तापाधिक्यन्तावत्तावन्मात्रा कोष्ठाग्नेरपि मन्दताऽवगन्तव्या। लङ्घनादिप्रयोजनञ्च तावदेव भवितुमर्हति। तेन रससामतानिरसनमेव निजज्वराणां मुख्यञ्चिकित्सितमित्युन्नेयम्। अतएवाहु:—"लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रस:। पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे" इति। आगन्तुज्वरेषु तु सत्यपि सन्तापाधिक्ये मांसरसादि पथ्यमुपदिशन्ति। यत्तु सुश्रुतवचनोद्धारी माधव: "स्वेदावरोध: सन्ताप: सर्व्वाङ्गग्रहणन्तथा" इत्यादि ज्वरलक्षणमाह, तत्र स्वेदावरोध इति व्याचक्षाणो डल्वन: "स्वेदावरोध: स्वेदानिर्गम:, एतच्च प्रायिकं लक्षणं, पैत्तिके स्वेदनिर्गमा"दित्यभिदधे। चरकेऽपि प्रायिकत्वमुक्तं यथा— "स्रोतसां संनिरुद्धत्वात् स्वेदं ना नाधिगच्छति। स्वस्थानात् प्रच्युते चाग्नौ प्रायशस्तरुणे ज्वरे" इति। तेन—"स्वेदोऽग्नि: स्विद्यतेऽनेनेति व्युत्पत्त्या तस्यावरोधो दोषव्याप्ति"रिति विजयरक्षितव्याख्यानमाग्रहमूलमेव। वस्तुतस्तु सुश्रुतोक्तिर्न लक्षणं किन्तु दिक्प्रदर्शनमात्रमिति न दोष:। अन्ये तु "स्वेदावरोध" इत्यत्र "वेगावरोध" इति पठन्तीति—डल्लनकृत एव समाधि:। अपरे तु सर्व्वत्र युगपत् स्वेदानिर्गम इत्यर्थमाहु:।

( पूर्व्वरूपम् ).

श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु।
जृम्भाऽङ्गमर्द्दो गुरुता रोमहर्षोऽरुचिस्तमः।
अप्रहर्षश्च शीतञ्च भवत्युत्पत्स्यति ज्वरे।
सामान्यतो, विशेषात्तु जृम्भात्यर्थं समीरणात्।
पित्तान्नयनयोर्दाहः कफान्नान्नाभिनन्दनम्॥

---

अथ निजज्वराणां सामान्यपूर्व्वरूपमाह—**श्रमोऽरति** रित्यादिना सौश्रुतसन्दर्भेन। (सु० उत्तर० ३८ अ०) श्रमोऽकृतश्रमस्यापि श्रान्तिबोधः। अरतिः शयनासनादौ सुखाभावः। विवर्णत्वं विशिष्टवर्णत्वं रौद्राभितप्तस्येव। वैरस्यं स्वाभाविकमुखास्वादस्य विकृतिः। नयनप्लवः वाष्पपूर्णनेत्रता। शीतादिषु मुहुरनवस्थितौ इच्छाद्वेषावनुरागविरागौ, आदिपदात् प्रियजनादिष्वपि। अङ्गमर्द्दोऽङ्गानान्त्रुव्यत्प्रायता। गुरुता गात्राणां शिरसश्च। अरुचिरन्नादिषु। तमोऽन्धकारदर्शनमिव। अप्रहर्षः दुःखितप्रायत्वम्। केचित्तु व्याचक्षते—प्रहर्षः कामोद्रेककृतं शिश्नोत्थानं तदभावः प्रमदासन्निधानेऽपि उद्रेकाभाव इति। शीतं हिमार्त्तस्येव शीतस्पर्शानुभवः। इत्येतदखिलमेवाल्पाधिकं सामान्यतः सर्वज्वरसामान्येन उत्पत्स्यति भविष्यति ज्वरे भवति। परस्मैपदमार्षम्। एकवचनान्तक्रियानिर्द्देशात् सर्व्वेषामेव पूर्व्वरूपाणां प्रायोभावित्वं सूच्यते। न च शङ्क्यं, सर्व्वेषां पूर्व्वरूपाणां दर्शने दुःसाध्यताऽसाध्यता वा स्यात्, यदुक्तं "पूर्व्वरूपाणि सर्व्वाणि ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः"—इति। 'अतिमात्रये'त्यभिधानात्। अतिमात्रयैव हि सम्भवन्ति पूर्व्वरूपाणि सर्व्वाणि मृत्युसूचकानि नत्वल्पाधिकमात्रया युगपत् सम्भवन्त्यपि—इति विशेषविदः।

अथ विशिष्ट पूर्व्वरूपमाह विशेषादिति। वाताधिक्ये जृम्भाधिक्यं, पित्ताधिक्ये नेत्रदाहाधिक्यं, कफाधिक्येऽन्नस्यानभिनन्दनं विशेषेणेति स्पष्टम्। एवं द्वन्द्वजे ज्वरे यथायथयोर्द्वयोः पूर्व्वरूपयो र्युगपदाधिक्यं सन्निपातज्वरे च त्रयाणाञ्चाधिक्यमुन्नेयम्, तदुक्तं सुश्रुते "सर्व्वलिङ्गसमावायः सर्व्वदोषप्रकोपजे। द्वयोर्द्वयोस्तु रूपेण संसृष्टं द्वन्द्वजं विदु"रिति ( सु० उ० ३८ अः )।

( वातज्वरलिङ्गानि )

वेपथुर्विषमो वेगः कण्ठोष्ठमुखशोषणम्।
निद्रानाशः क्षुतः स्तम्भो गात्राणां रौक्ष्यमेव च॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं बद्धविट्कता।
जृम्भाध्मानं तथा शूलं भवत्यनिलजे ज्वरे॥

( पित्तज्वरलिङ्गानि )

वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः।
कण्ठोष्ठमुखनासानां पाकः स्वेदश्च जायते॥
प्रलापः कटुता वक्त्रे मूर्च्छा दाहो मदस्तृषा।
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च॥

( श्लेष्मज्वरलिङ्गानि )

गौरवं शीतमुत्क्लेशो रोमहर्षोऽतिनिद्रता।

---

अथ सामान्यतो वातज्वरादीनां लिङ्गान्याह सुश्रुतवचनैः—**वेपथुरित्यादिभिः**। (सु० उत्तर० ३९ अ०) वेपथुः कम्पः। क्षुतः क्षवस्य स्तम्भोऽनिर्गमनं, क्षवः छिक्का (छांचोति प्रसिद्धा) शूलाध्माने सामे वातज्वरे एव भवति न निरामे। अन्यत् स्पष्टम्।

पित्तज्वरलिङ्गान्याह—**वेगस्तीक्ष्ण** इति। अतिसारः पित्तस्याधिक्यात् पित्तबहुल एव। वमिरपि प्रायः पित्तस्यैव। कण्ठादीनां पाकः सव्रणता क्वचिद् मुखादिक्षतं वा। स्वेदः ज्वरे सत्यपि अन्तरान्तरा उरोललाटादिषु घर्म्मनिर्गमः। प्रलापोऽतितीव्रपित्तज्वरे वातसंसर्गादेव भवति न सर्व्वत्र। कटुता तिक्तता, तदुक्तं "कटु स्यात्कटुतिक्तयो"रिति। मूर्च्छा तमःप्रवेशः स्वल्पेनाप्यायासेन। मदः पूगभक्षणेनेव मत्तता। भ्रमः चक्राकारभ्रमणेनेव। पीतनेत्रता ईषत्-पीततेव नेत्रयोर्न्नतु सर्व्वथा कामला, कामलायां प्रायेण वर्च्चसि पित्ताऽभाव-दर्शनात्। तान्येतानि पित्तज्वरलिङ्गानि क्वचिदेव सर्व्वत्र सर्व्वाणि सम्भवन्ति, सम्भवन्ति च सान्निपातिकतया प्रायः प्रतीयन्ते, परन्तत्र शीघ्रोपशमदर्शनात् पित्तज्वर एवायमिति दृग्विनिश्चयः कार्य्यः। विशेषश्चात्र प्रायेण रक्तकोठादि-दर्शनमपि भवति। एवं रोमान्तिकाऽपि बहुश एवंविधलक्षणैः सहचरितोपलभ्यते—इत्यस्माकमनुभवः।

अथ कफज्वरलिङ्गान्याह—**गौरवमिति**। गौरवं गुरुगात्रता। शीतमीष-च्छीतानुभवः, न तु विषमज्वरवदतिमात्रशीतम्। उत्क्लेशः उपस्थितवमित्वम्।

स्रोतोरोधो रुगल्पत्वं प्रसेको मधुरास्यता॥
नात्युष्णगात्रता च्छर्द्दिरङ्गसादोऽविपाकिता।
प्रतिश्यायोऽरुचिः कासः कफजेऽच्णोश्च शुक्लता॥

( द्वन्द्वजज्वरलिङ्गानि )

द्वयोर्द्वयोस्तु रूपेण संसृष्टं द्वन्द्वजं विदुः।
सर्व्वलिङ्गसमावायः सर्व्वदोषप्रकोपजे॥

---

स्रोतोरोधः स्वेदादिमार्गाणां बद्धप्रायता। आदिपदात् विण्मूत्रादिमार्गाणामपि प्रायः। क्वचित्तु कफज्वरे सामे मूत्राधिक्यमपि दृष्टम्। रुगल्पता रुजां शिरःपीड़ादीनां मन्दता। प्रसेको लालास्रावः। अङ्गसादो गात्राणां शैथिल्यम्। प्रतिश्यायो नासादिस्रावः। अन्यत् स्पष्टम्।

अथ द्वन्द्वजानां ज्वराणां लक्षणानि पृथगनुक्त्वा सूचयति सुश्रुतवचनेन द्वयोर्द्वयोरिति। कैश्चित् वातलिङ्गैः कैश्चित् पित्तलिङ्गैश्च मिलितैर्वातपैत्तिकः—इत्येवमादिप्रकारेणेति भावः। न च—केषाञ्चिदेव नियमेन लक्षणानां सम्भवो न सर्व्वेषां, यतश्चरकादौ वातपैत्तिकज्वरादीनां पृथग्लक्षणसमुदाया दृश्यन्ते— इति शङ्क्यम्। क्वचित् तादृशलक्षणसमष्टीनां क्वचिच्च यदृच्छया मिलितानां दोषलक्षणानां दर्शनात्। अतएव चरकेण दिग्दर्शनार्थं द्वन्द्वजानां ज्वराणां लक्षणान्यभिधाय समाप्तावुक्तं "निदाने त्रिविधा प्रोक्ता या पृथग्जज्वराकृतिः। संसर्गसन्निपातानां तया चोक्तं स्वलक्षणम्" (च० चि० ३ अ०)। अस्य ह्ययमर्थः—निदाने निदानस्थाने या त्रिविधा एकैकदोषजा ज्वराकृति र्ज्वरलक्षणसमुदाय उक्तः, तया च, चकारात् पूर्व्वोक्तलक्षणसमष्टिभिश्च, स्वलक्षणमुक्तम्। अस्य चाभिप्रायो निदानस्थाने चरकेण पुनः स्फुटीकृतो यथा—"तत्र यथोक्तानां ज्वरलिङ्गानां मिश्रीभावविशेषदर्शनात् द्वान्द्विकमन्यतमं ज्वरं सान्निपातिकं वा विद्यात्" इति (च० नि० १ अ०)। तदेतदखिलनिर्णायकं लिङ्गसूत्रमिहोद्धृतेन सौश्रुतवचनेनाविसंवादि सर्व्वथा समर्थ्यम्। या तु पुनरिह प्रकृतिसमसमवाय-विकृतिविषमसमवाययो र्व्याहती वाचोयुक्तिरारचिता विजयरक्षितेन, सा नेह घटते। असम्भवात्। प्रकृतिसमसमवायविकृतिविषमसमवाययोरयं ह्यर्थस्तेनैव व्याख्यातः। यथा "प्रकृत्या हेतुभूतया समः कारणानुरूपः समवायः कार्य्यकारणभावसम्बन्धः प्रकृतिसमसमवायः, कारणानुरूपं कार्य्यमित्यर्थः। यथा शुक्लतन्तुसमवायारब्धस्य पटस्य शुक्लत्वम्।

( साब्रिपातिकज्वरलिङ्गानि )

निद्रानाशो भ्रमः श्वासस्तन्द्रा सुप्ताङ्गताऽरुचिः ।
तृष्णा मोहो मदः स्तम्भो दाहः शीतं हृदि व्यथा ।
पक्तिश्चिरेण दोषाणामुन्मादः श्यावदन्तता ।
रसना परुषा कृष्णा सन्धिमूर्द्धास्थिजा रुजाः ।
निर्भुग्नकलुषे नेत्रे कर्णौ शब्दरुगन्वितौ ।
प्रलापः स्रोतसां पाकः कूजनं चेतनाच्युतिः ।
स्वेदमूत्रपुरीषाणामल्पशः सुचिरात् स्रुतिः ।
सर्व्वजे सर्वलिङ्गानि विशेषश्चात्र वक्ष्यते ॥

---

विकृत्या हेतुभूतया विषमः कारणाननुरूपः समवायो विकृतिविषमसमवायो यथा—हरिद्राचूर्णसंयोगे लौहित्यमिति ।" इह तु द्वन्द्वजज्वराणां चरकोक्तलक्षणसमष्टिषु नैकमपि तादृशं लिङ्गं पश्यामो यदारम्भकदोषद्वयमतिक्रम्य हरिद्राचूर्णसंयोगे लौहित्यवद् वैलक्षण्येन वर्त्तते, तत् कुतो विकृतिविषमसमवायारब्धता ? न च केषाञ्चिदेव लिङ्गानां नियमेन दर्शनम्, चरकोक्तादिशैव प्रत्यक्षतश्चानियमस्यैव-वदर्शनात् । तस्मात् महर्षिजनोक्तलिङ्गसूत्रस्मरणेनैव पुष्कलफलसिद्धेः किमनेनाऽस्थानप्रयुक्तेन वाग्विस्तरेण । चरकोक्तलक्षणसमष्टयस्तु दिग्दर्शनार्थमुक्ता बोद्धव्याः ।

अथ ह्रस्वत्वादिभेदेन त्रयोदशविधेषु दोषदूष्यसंमूर्च्छनादिविशेषादसंख्यविधेषु वा सन्निपातेषु प्रायेण सर्वत्र भाविनां लिङ्गानां समुच्चयं सामान्येनादौ सूचयति सौश्रुत सन्दर्भेन—**निद्रानाश** इति । (सु० उत्तर० ३८अ०) निद्रानाशः—अनिद्रताऽल्पनिद्रता वा । भ्रमश्चक्रारूढस्येवानुभवः । तन्द्रा अनिद्रितस्यापि निद्रितवद्भावः । सुप्ताङ्गता मक्षिकादिस्पर्शेऽपि गात्राणामनुभवमन्दता, नतु सर्व्वथा स्पर्शाज्ञता । मोहो मूर्च्छितवद्भावः क्वचिन्मूर्च्छाऽपि । स्तम्भः स्तब्धताऽङ्गानाम् । हृदि व्यथेति उरसि व्यथा नतु हृदयन्त्रे । प्रलापोऽसम्बद्धभाषणम् । स्रोतसां मुखनासादिरन्ध्राणां पाकः क्षतप्रायता क्वचित् सृक्कण्यादौ पिड़कानिर्गमश्च । कूजनं कण्ठे कपोतवद्ध्वनिः । चेतनाच्युतिः संज्ञानाशः । मूर्च्छा तु क्षणमात्रस्थायिनी, चेतनाच्युतिस्तु दीर्घकालं संज्ञाया अभावोऽल्पता वा, चित्तनाश इति केचित् । स्वेदादीनां सुचिरात्स्रुतिर्निर्गमः । तान्येतानि लिङ्गानि सामान्यात् सर्व्वजे सान्निपातिके । सान्निपातिकज्वर-

## अभिन्यासज्वरः ।

"नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तप्रेक्षो हतस्वरः ।
खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्ज्जितः ।
सास्रनिर्भुग्नहृदयो भक्तद्वेषी हतप्रभः ।
श्वसन् निपतितः शेते प्रलापोपद्रवायुतः ।
तमभिन्यासमित्याहुर्हतौजसमथापरे ।
सन्निपातज्वरं कृच्छ्रमसाध्यमपरे विदुः ॥"

( सन्निपातज्वरेषु मर्य्यादा )

"वातपित्तकफैः सप्त-दश-द्वादश वासरान् ।
प्रायोऽनुयाति मर्य्यादा मोक्षाय च बधाय च ॥"

जातिष्विति भावः । जातावेकवचनम् । विशेषश्चात्र वक्ष्यते, अभिन्यासलक्षणादौ । त्रयोदशविधानां सान्निपातिकज्वराणां लक्षणानि तु चरकादौ द्रष्टव्यानि, विस्तरभिया मूले नोक्तानि । आचार्य्यमाधवकरोक्तः—"क्षणे दाहः क्षणे शीत"-मित्यादिलक्षणो ज्वरस्तु समत्रिदोषसान्निपातिकः । स चेदानीं प्रायो न दृश्यते । आचार्य्यभावमिश्राद्युक्ता विधु-फल्गु-मकरी-विस्फुरक-शीघ्रकारि-कप्फणादिसंज्ञाः सान्निपातिकज्वरा अपि साम्प्रतं प्रविरला एवेति नोक्ताः ।

अथेदानीमपि प्रसिद्धं घोरतमं सान्निपातिकज्वरविशेषमभिन्यासं नामाह सौश्रुतवचनेन ( सुश्रुत ० उत्तर ० ३८ अ० ) नात्युष्णेति । नात्युष्णशीतः साधारणाङ्गस्पर्शः । अल्पसंज्ञः किञ्चिदिव चेतनावान् । भ्रान्तप्रेक्षो उन्मत्तवदस्थिरमूढदृष्टिः । सास्रः किञ्चिदश्रुपातशीलः । निर्भुग्नहृदयः मूढचित्तः । भक्तद्वेषी किञ्चिदपि अन्नादिकमनिच्छन् । श्वसन् द्रुतश्वासशीलः । निपतितः शेते काष्ठवदचेष्टमानस्तिष्ठति । प्रलापोपद्रवायुतः, सर्व्वथा वाक्शक्तेर्लोपात् लुप्तप्रायत्वाद् वा प्रलापोपद्रवो नैव भवति, भवति वा स्तोकेन । न तु प्रलापोपद्रवेण आयुतः अत्यर्थयुत इति डल्वनवद् व्याख्येयम्, असम्भवात् । तं सन्निपातविशेषं केचिदभिन्यासमपरे हतौजसमन्ये कृच्छ्रसन्निपाताख्यं विदुरिति संज्ञात्रयेण व्यवहारः प्राचाम् ।

अथ सन्निपातज्वरमर्य्यादामाह वातपित्तेत्यादि--वाग्भटीयवचनेन

"इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ।
द्विगुणा सप्तमी चैव नवम्येकादशी तथा ॥"

( सन्निपातज्वरान्तेभाविन उपद्रवाः )

वाधिर्य्यमङ्गवैकल्यमुन्मादो मूकताऽन्धता ।
क्वचित् स्युः सन्निपातान्ते एकशो वा द्विशोऽपि वा ॥
"सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः सञ्जायते तस्मात् कश्चिदेव प्रमुच्यते ॥"

( अष्टाङ्गहृ० नि० २अ० ) । वातोल्वणत्वे सप्ताहं, पित्तोल्वणत्वे दशाहं, कफोल्वणत्वे द्वादशाहमिति क्रमः । प्राय इत्युक्तेः क्वचिदन्यथाऽपि मर्य्यादा भवति । मोक्षाय च वधाय चेति दोषपाके मोक्षो धातुपाके तु बधो मर्य्यादान्ते वोद्धव्यः । तन्त्रान्तरेऽप्युक्तम्—"पित्तकफानिलवृद्ध्या दशदिवस-द्वादशाह सप्ताहान् । हन्ति विमुञ्चति वाशु त्रिदोषजो धातुमलपाकात् ॥" तदेतदग्निवेशमतम् । हारीतमते तु द्विगुणेत्यादि मर्य्यादाचतुष्टयम् । द्विगुणा सप्तमी चतुर्द्दशी, सप्तम्याश्च ग्रहणं चकारेण । एवञ्च सप्तम-नवम-दशमैकादश-द्वादश-चतुर्द्दशदिनानि अर्थात् प्रायः समग्रमेव द्वितीयसप्ताहं सर्व्वेषु सन्निपातज्वरेषु सङ्कटप्रायमाहुर्वृद्धाः । केचित्तु द्विगुणेति प्रत्येकशो योजयित्वा व्याचक्षते, तेन चतुर्द्दशाष्टादशद्वाविंशदिनानामपि लाभः । नन्वेवं चेत् कथं क्वचिद् अष्टाविंशतिदिनेज्व्वरमोक्षः ; उच्यते—दोषवाहुल्यात् तत्र चतुर्द्दशद्वैगुण्यं, प्रभावविशेषाद्वा । अतएव मूले प्राय इत्युक्तम् ।

सन्निपातज्वरान्तेभाविनः क्वाचित्कानुपद्रवानाह—वाधिर्य्यमित्यादि । वाधिर्य्यं श्रवणशक्तिहानिः । अङ्गवैकल्यं करपादादीनां चेष्टाहानिः शोषश्च क्रमशः । उन्मादः उन्मत्तवत् चेष्टादयः । मूकता वाक्शक्तिविलोपः गद्गदत्वं वा । अन्धता दृष्टिशक्तिहानिः । एषाञ्चोपद्रवाणामत्याधिक्येन एकशो द्विशो वा प्रादुर्भावः ।

उपद्रवान्तरमाह क्वाचित्कमेव सन्निपातेति । सोऽयं शोथः कर्णमूलस्थलालाग्रन्थौ क्वचित् क्षीणस्य दृश्यते, पच्यते च प्रायः । मुच्यतेऽपि कश्चित्तस्मात् चिकित्साकौशलेन । एष च कर्णमूलशोथः कर्णमूलिकज्वरे वक्ष्यमाणे आदौ मध्ये वा जायमानात् कर्णमूलशोथात् सर्व्वथा भिन्न एव, तस्य सुखसाध्यत्वात् । अन्यत्रापि श्रूयते—"ज्वरादितो वा ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोथः । क्रमेण साध्यस्त्वथ कृच्छ्रसाध्य स्तथाप्यसाध्यः कथितो मुनीन्द्रैः ॥"—इति । कर्ण-

सन्निपातज्वराणां साध्यासाध्यता )

"दोषे विबद्धे नष्टेऽग्नौ सर्व्वसम्पूर्णलक्षणः ।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥"

## अथ आगन्तुज्वराः ।

"अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः ।
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥"

मूलशोथोद्भवकारणन्तु ज्वरकाले सम्यङ्मुखदन्तादिशोधनाभावात् मुखादिमलोद्भूतविषाणां कर्णमूलस्थलालाग्रन्थौ संक्रमणमेव ज्ञेयम् । तेन ज्वरितस्य जिह्वादन्तवेष्टादीनां नित्यशोधनमत्यावश्यकमिति स्मर्त्तव्यम् ।

सन्निपातज्वराणां साध्यासाध्यतामाह चरकीयवचनेन—दोषे इति । इह दोषे दूषितमलमूत्रादौ मलभूतपित्तश्लेष्मणोश्च । विबद्धे अच्यवमाने । अग्नौ जरणशक्तौ । सर्व्वसम्पूर्णलक्षण इति सर्व्वाणि सम्पूर्णानि लिङ्गानि यत्र दृश्यन्ते तत्र प्रायेण असाध्यतेत्यभिप्रायः । स्पष्टमन्यत् ।

ननु वातादीनां परस्परविरुद्धगुणानां कथं सम्भूयसमुत्थानं, सम्भूयसमुत्थाने वा कथं न परस्परगुणोपघात इति चेदुच्यते । वायुर्हि योगवाहः, यदुक्तं "योगवाहः परं वायुः संयोगादुभयार्थकृत्" इति, तेन वायुना न कस्यचिद्विरोधः । अथ पित्तश्लेष्माणौ परस्परविरुद्धावपि स्वभावादेकत्रावस्थायिनौ, विकृतावस्थायां चैकत्र विकृतिलक्षणदर्शिनौ युगपद् भिन्नक्षणेषु वा दृश्येते भूयः । तद्यथा—तिक्तमधुरास्यता, आलस्यमूर्च्छे, उत्क्लेदवमने चेत्येवमादीनां द्वन्द्वानां युगपदेव सम्भवः, दाहशैत्यादीनां च भिन्नक्षणेषु । तदुक्तं "क्षणे दाहः क्षणे शीतम्" इत्यादि । तेन कार्य्ये न विरोधः पित्तश्लेष्मणोः । दोषाणामविरोधेन प्रवृत्तौ हेतुस्तु चरके यथा—"विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् । दोषाः सहजसात्म्यत्वाद् घोरं विषमहीनिव" इति । सहजसात्म्यत्वात् स्वाभाविकसाहचर्य्यात् । वस्तुतस्तु अचिन्त्यस्वभावादित्येव सुवचम् ।

अथ आगन्तुज्वरानाह—अभिघातेति । अभिघातजः अभिषङ्गजः, अभिचारजः, अभिशापजश्चेति चतुर्विधः समासादागन्तुज्वर इत्यभिप्रायः । तत्राद्यौ प्रायोदृष्टौ । अन्त्यौ तु विरलौ, इदानीं तपःप्रभावदौर्बल्यात् । अभिघाताभिषङ्गपदयोरर्थौ तु अनुपदमेव वक्ष्येते । अभिचारः श्येनयागादि मारणोच्चाटनकर्म्म ।

शस्त्रलोष्टकशावह्निदंशाद्यैरभिघातजः।
प्रायस्तत्र रुजाशोफौ वायुना रक्तदूषणात्॥
"कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः।
सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः॥"
"विषवृक्षानिलस्पर्शात् तथान्यैर्विषसम्भवैः।
अभिषक्तस्य चाप्याहु र्ज्वरमेकेऽभिषङ्गजम्॥"

अभिशापः गुरु-विप्र-सिद्धादीनां क्रोधोत्पन्नमहिताशंसनम्। तच्चागन्तुज्वरं चतुर्विधमपि यथास्वं यथास्वनिमित्तं यथास्वलिङ्गञ्च दोषैर्वातादिभिर्विभावयेद् जानीयात्, यदुक्तं—"कामशोकभयाद् वायुः क्रोधात् पित्त"मित्यादि, "कामाद्भ्रमोऽरुचिर्दाहः" इत्यादि च। एष दोषसम्पर्कः परस्तादुभावी न त्वारम्भक इति स्मर्तव्यम्, व्यथायाः पूर्वमेव सम्भवात्। यदुक्तं चरके—"ते पूर्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः। हेत्वौषधविशिष्टाश्च भवन्त्यागन्तवो ज्वराः"॥ इति (च॰ नि॰ १ अ॰)। केवलाः व्यथामात्ररूपाः, हेत्वौषधैर्विशिष्टा विलक्षणाः।

अभिघातजज्वरमाह—**शस्त्रलोष्टेति**। कशा चर्म्मादिमयी रज्जुः। वह्निर्वह्निदाहः। दंशो विषाक्तजन्तुकृतः। आदिशब्देन अध्वश्रम-तटप्रपातादि। प्राय इति निर्देशो रक्तदूषणहेतुकरुजाशोफयोः श्रमज्वरादौ क्वचिदेव दर्शनात्। रक्तदूषणञ्च विषदिग्धशस्त्राभिघात-दुर्दग्धादिष्वेव भूम्ना दृश्यते येन क्वचिद् वीसर्पापतानकादिप्रादुर्भावो मरणञ्च।

अभिषङ्गज्वरमाह—**कामशोकेति** चरकीयसन्दर्भेण। अभिषक्तस्य अभिभूतस्य। यश्च भूताभिषङ्गज इति वचनभङ्ग्या तस्य गौणत्वं विरलत्वञ्च सूच्यते। इदानीन्तनास्तु भूतावेशं त्रासमात्रमाहु र्मानसरोगविशेषं वा। वृद्धास्तावत् पिशाचादिग्रहावेशो भवत्येवेति मन्यन्ते, व्याचक्षते च "न ते मनुष्यैः सह संविशन्ति न वा मनुष्यानथवा विशन्ति। ये त्वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः"—इति संशयच्छेदि सौश्रुतवचनं देवादिग्रहविषयम्, प्रतिसंस्कर्तुस्तथैवाभिप्रायदर्शनात्। वयन्तु सर्वत्र योज्यमिदं प्रतीमः।

अथान्यमपि अभिषङ्गजज्वरमाह—**विषवृक्षेति** चरकवचनेनैव। विषवृक्षवनोपकण्ठे चरतस्तीव्रौषधिगन्धघ्राणादिजन्यो ज्वर ओषधिगन्धज उच्यते। तस्यैव प्रकारभेदो वृद्धसुश्रुते तृणपुष्पाख्यः श्रूयते। तथाहि श्रीमदाचार्य्यविजयरक्षितोद्धृतः पाठः—"पुष्पेभ्यो गन्धरजसी तेजस्विभ्यो यदानिलः"—इत्यादि। तथा अन्ये-

"ध्यानं निःश्वासबहुलं लिङ्गं कामज्वरे स्मृतम्।
शोकजे बाष्पबहुलं त्रासप्रायं भयज्वरे॥"
शिरोरुगरुचिर्ध्यानं नेत्ररागश्च कोपजे।
अभिशापाभिचाराभ्यां घोरो दाहादियुग् ज्वरः॥
विषान्मूर्च्छातिसारास्यश्यावता-दाहहृद्रुजाः।
सामान्यतो, विशेषात्तु यथास्वं लक्षणैर्ज्वरः॥

विषसम्भवैः विकृतपर्य्युषितमत्स्यमांसादिभिरुपयुक्तैः सविषजीवाणुवर्त्तिभिश्च कृता ये ज्वरास्तेऽपि अभिषङ्गजाः। केचिदिति निर्द्देशेऽपि परमतमप्रतिषिद्धमनुमतमेव चरकेण। एवञ्च ग्रन्थिकादयः केचन जीवाणुविषकृतज्वरा अप्यभिषङ्गजा एवेति स्पष्टम्। यच्च सन्ततादयः पञ्च विषमज्वरा अपि जीवाणुकृता एवेति वक्ष्यते, तत्रापि अभिषङ्गजत्वमाहुरेव केचन प्राञ्चः, यदुक्तं—"आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे" इति (च० चि० ३ अ०), "केचिद् भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम्" इति च। अत्र भूताभिषङ्गो जीवाणुकृतोऽभिषङ्ग—इति व्याचक्षीरन् नव्याः।

अथ अभिषङ्गजज्वराणां निमित्तान्यभिधाय लिङ्गानि दर्शयति चरकीयसन्दर्भेण **ध्यान**मिति। ध्यानमिष्टजनस्य। अन्ये त्वाहुः—"कामजे चित्तविभ्रंशस्तन्द्रालस्यमभोजनम्" इति। शोकजे बाष्पबहुलमश्रुबहुलम्, कदाचिद् दुश्चिकित्स्यातिसारसहितमपीत्यस्मदनुभवः। भयजे त्रास एवानिमित्तं बहुशः, क्वचित् प्रलापवेपथ्वादि च। कोपजे तु शिरोरुगादि। क्वचिद् वेपथ्वादि च। क्वचित्तु विनापि ज्वरं तत्तल्लिङ्गं भवत्येवेति स्मर्त्तव्यम्।

**अभिशापे**ति। अभिशापाभिचारौ व्याख्यातौ। दाहादीत्यादिपदेन तृष्णामोहादेर्ग्रहणम्। घोरः सुदुःसहः। वाग्भटः पुनराह—"तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते। पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः। सदाहमूर्च्छाग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः" इति। वस्तुतस्तु "वैविध्यादभिचारस्य शापस्य च तदात्मके। यथाकर्म्मप्रयोगेण लक्षणं स्यात् पृथग्विधम्"—इति चरकोक्तदिशा बहुधा सम्भवन्ति तल्लक्षणानीति तत्त्वम्।

विषाभिषङ्गजं ज्वरमाह सामान्यतो **विषादि**ति। मूर्च्छा मत्तवद् भावः संज्ञालोपो वा। आस्यश्यावता पीताभश्याममुखच्छविः। दाहः सर्व्वगात्रेषु

"ते पूर्व्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः ।
हेत्वौषधविशिष्टाश्च भवन्त्यागन्तवो ज्वराः ॥"

## अथ विषाभिषङ्गजा आगन्तुज्वराः ।

अथेदानीं प्रसिद्धा ये केचिदागन्तवो ज्वराः ।
नानाविधविषोत्थानास्तान् वक्ष्यामः सविस्तरम् ॥
विषञ्च तेषु प्रायेण भवेद् जीवाणुसम्भवम् ।
क्वचिदन्यविधं वापि त्रिदोषप्रकोपणम् ।

आमाशयादौ वा । हृद्रुजा हृत्प्रदेशे पीड़ा, हृदयन्त्रस्य सदनञ्च । तदेतत् सामान्यतो नानाविषसाधारणं लिङ्गम् । विशेषात्तु यथास्वं, यस्य विषस्य यानि यानि लिङ्गानि तैस्तैर्युतो ज्वरो भवति । विषञ्च द्विविधं स्थावरं जङ्गमञ्च । तत्र स्थावरं कन्दफलमूलत्वक्पत्रादिक्रियाभेदादनेकविधम् । जङ्गमञ्च पशुपक्षिसर्पकीटादिदृश्यप्राणिविषभेदाद् अदृश्यप्रायसूक्ष्मजीवाणुविषभेदाच्च नानाप्रकारम् । अदृश्यक्रिमिविषयश्चास्माभिः प्राचामुक्तिभिः साधितपूर्वो विशिष्टनिदानव्याख्यायाम् ।

अथ आगन्तुज्वराणां वैशिष्ट्यमाह चरकीयवचनेन ( च० नि० ३ अ० ) **ते पूर्वमिति** । ते पूर्वोक्ता आगन्तवो ज्वराः पूर्वमारम्भकाले केवलाः कामक्रोधादिविषान्तहेतुमात्रकृताः, न तु दोषकृताः । पश्चात् समनन्तरकाले निजैर्वातादिकृतैः रोगैर्व्यामिश्रलक्षणाः, पश्चाद्दोषप्रकोपाद्धेतोः वातादिकृतज्वरादीनां लक्षणैर्मिलितलक्षणाः । आपातदृष्ट्या हि प्रायस्तादृशा एव ते प्रतिभान्तीत्यभिप्रायः । हेत्वौषधविशिष्टाश्च, तथापि हेतुभिर्निदानैरौषधैः क्रोधादिप्रशमनैर्विषादिनाशकैश्चोपक्रमैर्विशिष्टा इतरविलक्षणा भवन्ति । एवञ्च—वातादिलक्षणसादृश्यात् वातादिजन्या एव सन्तु ते रोगाः, वातादिप्रशमनैरौषधैः सम्यगुपक्रम्याश्च, किं विषादिविशेषविज्ञानेन—इति न भ्रमितव्यम् । आगन्तुहेतुविषादिप्रभाववैचित्र्याद् । विचित्राणि हि तत्र तत्र लिङ्गानि विचित्रप्रभावैर्भेषजादिभिश्च प्रशमनीयानि, तानि शिष्यस्य गुरुशुश्रूषया भूयोदर्शनेन चेति परमर्षीणामभिसन्धिः ।

अथैवमागन्तुज्वराणां हेत्वौषधवैशिष्ट्यमभिधाय इदानीं प्रसिद्धान् विशिष्टजातीयान् विषाभिषङ्गज्वरानुपक्रमते--**अथेदानीमिति** । नानाविधविषाणि

हेतुलिङ्गपृथक्त्वेऽपि सामान्यं तेष्विदं स्थितम्।
विषं सर्वाशयान् प्राप्य कञ्चित् कस्यापि पीड़येत्।
ततः श्वासश्च कासश्च मोहोऽतिसरणं वमिः।
मूत्ररोधश्च हृत्सादः सन्धिशूलश्च कामला।
अन्ये चोपद्रवाः केऽपि प्रादुःषन्ति द्विशस्त्रिशः।
विषस्वभाववैचित्र्यात् क्षेत्रवैचित्र्यतस्तथा।

( परिसंख्यानम् )

आन्त्रिको ग्रन्थिकश्चापि श्लैष्मिकः सन्धिकस्तथा।
यश्च श्वसनको नामाऽऽक्षेपको यश्च वक्ष्यते।

पूर्व्वोक्तस्थावरजङ्गमानि तान्युत्थानानि हेतवो येषामिति नानाविधविषोत्थानाः। विषजेति। प्रायेण जीवाणुसम्भवं क्वचिदन्यविधं पार्थिवादि वा। द्वित्रदोषप्रकोपणं, द्वौ त्रयो वा परिमाणमेषामिति द्वित्राः, द्वित्राणां दोषाणां प्रकोपणं, विषस्वभावाद्वा तदल्पाधिक्याद्वा क्वचिद् द्विदोषकोपनं क्वचिद्वा त्रिदोषकोपनमित्यभिप्रायः। सर्व्वाशयान् आमाशय-पक्वाशय-वृक्क-वस्ति-यकृत्-प्लीह-फुस्फुस-मस्तिष्कादीन्। आशयानित्युपलक्षणं तेन त्वक्-सन्ध्यादीनामपि ग्रहणम्। कस्यचिद् रोगिणः कञ्चित् उक्ताशयानामन्यतममाशयं पीड़येत् विशेषेणाभिभवेत्। अत्र एकवचनमतन्त्रं, तेन कदाचिद् द्वित्राणामाशयानां सर्व्वेषां वा युगपत् प्रदूषणं भवत्येव। आशयप्रदूषणलिङ्गान्याह तत इति। ततो हेतोः श्वासादयः अन्ये चोपद्रवा हिक्कादयः द्विशस्त्रिशश्च प्रादुःषन्ति प्रादुर्भवन्ति। तद्यथा—फुस्फुसाक्रमणे सति श्वासकासौ। मस्तिष्कदूषणे मोहतन्द्राप्रलापादयः। आमपक्वाशयदूषणे वमिरतीसारश्च। वृक्कवस्तिदूषणे मूत्ररोधो रक्तमूत्रता वा। हृदयन्त्रदूषणे तदवसन्नता तत्क्रियारोधश्च क्वचित्। सन्धिदूषणे सन्धिशोथशूलादि। यकृद्दूषणे यकृच्छूल-कामलादि। ननु कस्यचित् कोऽप्याशयः कथं दूष्यते इति शङ्कायां हेतुद्वयमाह—विषस्वभाववैचित्र्यात् विषस्य आशयविशेषाक्रमणशीलत्वात्, क्षेत्रस्य रोगिशरीरस्य वैचित्र्यात् आशयविशेषदौर्व्बल्याच्चेति।

विषाभिषङ्गजानागन्तुज्वरान् साम्प्रतिकप्रसिद्धया नामभिः परिसंचष्टे—आन्त्रिक इति। जानपदिकाः समग्रे जनपदे युगपत् प्रवर्त्तमानाः क्वाचनिकाः क्वचन रोगिणि इतस्ततो दृश्यमानाः। भूवायुजलदोषत इति चरके जनपदोद्ध्वंसनीये यथोक्तं

षड़ेते विषजा घोराः सर्व्वधातुप्रदूषणाः ।
ज्वराः स्युर्जानपदिकास्तथा क्वाचनिका अपि ।
मसूरिकाद्या ये चान्ये भू-वायु-जलदोषतः ।
काले काले प्रवर्त्तन्ते तेऽपि ज्ञेयास्तथाविधाः ॥
दण्डकाख्यो ज्वरो दुःखस्तथान्यः कर्णमूलिकः ।
द्वावेतौ स्वल्पविषजौ सुखसाध्यौ विदुर्बुधाः ।
संक्रामन्ति च सर्वेऽपि श्वसनस्पर्शनादिभिः ॥

## तत्रादौ आन्त्रिकज्वरः ।*

निदानम् )

अध्वोपवासक्लिष्टानां दुर्गन्धाभ्यर्णवासिनाम् ।
प्रायो मलादिसंसृष्टभक्ष्यपानोपयोगतः ।
सर्वेष्वृतुषु भूम्ना तु ग्रीष्मे शरदि वार्षिके ।
आन्त्रिकाख्यो ज्वरः कृच्छ्रो दृश्यते घोरलक्षणः ।
तस्य जीवाणवः केचिन्मलमूत्रादिसम्भवाः ।
विशिष्टं तु निदानं स्युः—

"तेषां तथाविधान्तर्हितधर्म्माणामधर्म्मप्रधानानामपक्रान्तदेवतानामृतवो व्यापद्यन्ते। तेनापोऽयथाकालं देवो वर्षति न वा वर्षति विकृतं वा वर्षति, वाता न सम्यगभिवान्ति, क्षितिर्व्यापद्यते, सलिलान्युपशुष्यन्ति, ओषधयः स्वभावं परिहाय आपद्यन्ते विकृतिं, तत उद्ध्वंसन्ते जनपदाः स्पर्शाभ्यवहार्य्यदोषात्।" इति (चरक० वि० ३अ०)। दण्डक-कर्णमूलिकौ द्विदोषप्रकोपणौ प्रायो विषदौर्बल्यादिति चाग्रे वक्ष्यते। श्वसनस्पर्शनादिभिरित्यादिपदान्मलमूत्रादिभिरपि संक्रमः।

अथ सामान्येन अन्त्राश्रयित्वादान्त्रिकाख्यस्य ज्वरस्य निदानमाह—**अध्वेति**। अध्वा मार्गः। अध्वादिक्लिष्टानां दीर्घपथश्रान्तानामुपवासकर्शितानाञ्च। प्रायःपदं पूर्वेण योजनीयम्। तेन अन्येषामपि भवतीति सूच्यते। ऋतुविशेषमाह—सर्वे-

---

* अन्त्रिकज्वरस्य आंग्लभाषानाम—'एण्टेरिक फीवर' अथवा 'टाइफयेड् फीवर' ( Entric Fever or Typhoid Fever ).

( सम्प्राप्तिः )

—अथान्त्राश्रयिणश्च ते।

रसं रक्तञ्च दोषांश्च कोपयन्त्यचिरादपि।
चिण्वन्ति चान्तिमं भागं क्षुद्रान्त्राणां शनैः शनैः॥
ततोऽन्त्रक्षतसंवृद्धौ क्वचिद्रक्तस्य निःस्रवः।
भिन्नान्त्रता ऽथवा ऽसाध्येत्येष वैकृतनिश्चयः॥

---

श्चेति। भूम्ना प्राचुर्य्येण। दुर्गन्धाभ्यर्णवासिनां दुर्गन्धसमीपे वासशीलानाम्। तान्येतानि सामान्यनिदानानीति विशेषणमुखेनोक्तानि। विशिष्टं तु निदानं सूचयति मलादीति। पञ्चम्यर्थस्तसिः। कृच्छ्रः कष्टसाध्यः सान्निपातिकलिङ्गानां विशेषतो दर्शनात्। अथ विस्तरेण विशिष्टं निदानमुच्यते तत्रेति। मलमूत्रादि-सम्भवाः तद्रोगजुष्टानां मलमूत्रादिषु सम्भवन्तः। तत्प्रवेशक्रमश्च पानीयजलादि-द्वारेण तल्लिहमक्षिकादीनां खाद्यादिस्पर्शेन वा। एवञ्च अध्वोपवासादिसामान्य-निदानैर्विनापि पानीयजलादिदोषाद् भवत्येवासौ ज्वर इति पर्य्यवस्यति।

अथ जीवाणूनां विकारित्वं दर्शयति अथान्त्रेति। अथ ते च जीवाणवो विशेषेणान्त्राश्रयिणो रसमन्नजं सारं, रक्तं शोणितं, दोषांश्च वातादीन् अचिरादपि शीघ्रमेव कोपयन्ति। अन्त्राश्रयणञ्च यद्यपि सार्वत्रिकं, तथापि दारुणस्थले वृक्क-फुसफुसाद्यन्यशारीरयन्त्राणामपि तदाक्रमणं दृश्यते भूयः। उक्तञ्च पूर्वम् "विषं सर्वाशयान् प्राप्य कञ्चित् कस्यापि दूषयेद्" इति। अन्त्राक्रमणप्रकारं पुनर्विश-दयति चिण्वन्तीति। क्षुद्रान्त्राणामन्तिमं चरमं भागम्। क्वचिद् वृहदन्त्र-स्यादिमभागञ्चेति सान्निध्याद् बोध्यम्। चिण्वन्ति, काष्ठं घुणकीटवद् भक्षयन्ति। शनैः शनैरिति क्रमेण रोगस्य द्वितीयसप्ताहात् परमेव प्राय—इत्यभिसन्धिः। ततश्च हेतोरन्त्रक्षतानां संवृद्धौ विशेषेण वृद्धौ सत्यां क्वचिद् रक्तस्य निःस्रवः, दुर्जर-खाद्यादिसम्भवकठिनमलादिसम्पर्केण क्षतस्य भिन्नीभावादित्यभिसन्धिः। क्वचित्—न तु प्रायः। प्रायस्तु क्षत एव काले अन्त्रक्षतानां संरोहणादारोग्यसम्भवः। इह रक्तस्य निःस्रवो रक्तस्रावः पायुमार्गेण। अथवा भिन्नान्त्रता अन्त्रेषु छिद्रसम्भवात्, तेन उदरगुहाभ्यन्तरत एव रक्तस्रावः। असाध्येति। सद्यःशस्त्रकर्म्मणा क्वचित् साध्याऽपि कायचिकित्सकानामसाध्यैव सा प्रायः। वैकृतनिश्चयः आभ्यन्तरविकार-निर्णयः सम्प्राप्तिः।

( पूर्वरूपम् )

शिरोरुगरुचिः सादो विड्विबन्धोऽरतिस्तमः।
स्फुटास्फुटं पूर्वलिङ्गं प्रायः स्यादान्त्रिके ज्वरे।

( रूपम् )

तदेव सज्वरं रूपमष्टाहेन स्फुटीभवेत्।
ज्वरश्च वर्द्धते नित्यं क्रमारोहेण लक्षितः।
प्रायशो दृश्यते किञ्चित् प्लीहश्चाप्यभिवर्द्धनम्।
क्वचिच्च सम्भवलयौ गात्रे ष्वारक्तलक्ष्मणाम्॥

---

आन्त्रिकज्वरपूर्वरूपमाह —**शिरोरुगिति**। सादोऽङ्गसदनम्। तमोऽन्धकारदर्शनम्। स्फुटास्फुटमिति क्वचित् पूर्वरूपं स्फुटं दृश्यते क्वचिन्नापि दृश्यते, तेन सामान्यज्वरसन्देह एव भवति पूर्वम्।

आन्त्रिकज्वरस्य रूपमाह —**तदेवेति**। तदेव पूर्वोक्तं लक्षणषट्कं ज्वरसहितमष्टाहेन रूपं रूपाकारेण स्फुटीभवेत् क्रमात् स्पष्टतरं प्रतिभासेत। ज्वरसन्तापवैशिष्ट्यमाह ज्वरश्चेति। क्रमारोहेण लक्षितः पूर्वपूर्वदिनात् सोपानावलिन्यायेन तत्तत्परेद्युः प्रातःसायंकालयोः क्रमादधिकाधिकसन्तापेन उपलक्षितः। क्रमारोहावरोहप्रकाराश्च प्रथम चित्रे दर्शिताः।

( प्रथम चित्रम् )




[ आन्त्रिकज्वरे सन्तापस्य क्रमारोहावरोहादिप्रदर्शकं चित्रम्। ]

चित्रे * इति चिह्नाङ्किता रेखा स्वाभाविक सन्ताप दर्शिका।

पश्चाहात् परतः प्रायः क्वचिन्नैव चिरेण वा ।
चणमुद्गादियूषाभं साध्मानमतिसार्य्यते ॥
अथ द्वितीये सप्ताहे प्रवृद्धस्तिष्ठति ज्वरः ।
तदा स्युररतिस्तन्द्रा मुखशोषः प्रमीलकः ।
कासः प्रलापो दौर्बल्यमाध्मानञ्च विशेषतः ।
जिह्वा च रक्तपर्य्यन्ता कर्कशा स्फुटितोपमा ।
सन्तापोऽभ्यधिकश्चापि धमनी नातिचञ्चला ।
सान्निपातिकलिङ्गानामन्येषाञ्चापि सम्भवः ॥
अथास्य दोषपाकेन नैरुज्ये सम्भविष्यति ।
प्रायस्तृतीये सप्ताहे क्वचित्तुर्य्येऽथवा पुनः ।

---

ज्वरस्य क्रमारोहणञ्च अष्टाहावधि दृश्यते क्वचित्ततः परमपि द्वित्राणि दिनानि । प्रायशः प्लीहाभिवृद्धिरित्युक्तेः क्वचिन्नापि भवति । स्मर्त्तव्यञ्चात्र, पूर्वतो विषमज्वरात्तस्य प्लीहाभिवृद्धिर्नान्त्रिकज्वरं निश्चयेन सूचयेदिति । आरक्तलक्ष्मदर्शनञ्च प्रथमसप्ताहे गौरगात्रेषु स्पष्टं, श्यामाङ्गे तु न स्फुटं प्रायः ।

**पश्चाहादिति ।** क्वचिदतीसारो नैव भवति विलम्बेन वा भवति, यत्र तु भवति तत्र चणकादियूषवत् पीताभमतिसार्य्यते इति निर्णायकं लिङ्गम् । सत्यपि चातीसारे आध्मानं तिष्ठतीत्ययमपि रोगप्रभाव एव । प्रमीलकः प्रमूढ़ावस्था । रक्तपर्य्यन्ता मध्ये मलिना पर्य्यन्तेषु रक्ता । सन्तापोऽभ्यधिकः, दैहिकः सन्तापः (१०४—१०५ इतिवत्) प्रवृद्ध एव तिष्ठति स्तोकेन परिवर्त्तमानः । मानसश्च सन्तापो युगपदविशेषेण । धमनी नातिचञ्चला, ज्वरवेगाधिक्यादन्यज्वरेषु धमनी यथा अतिचञ्चला भवति नेह तीव्रज्वरेऽपि तथा, ईषच्चञ्चला तु भवत्येव । अन्येषाञ्च सान्निपातिकलिङ्गानां शिरोलोठनेन्द्रियध्वंसादीनाञ्च सम्भवो दारुणाव्यस्थेष्विति शेषः । तदा च आयुषो योगाद्वा चिकित्साकौशलाद्वा जीवत्यातुरः ।

**अथास्येति ।** दोषाणां जीवाणुविषकोपितानां वातादीनां पाकेन क्रमात् स्वभावप्राप्त्या नैरुज्ये आरोग्ये सम्भविष्यति सम्पत्स्यमाने सति । एतेन धातुपाके प्राप्ते ज्वरावरोहणं न भवति, क्रमादवर्द्धते च ज्वरः सर्वसम्पूर्णलक्षणो

ज्वरः सोपद्रवगणः क्रमेणैवावरोहति ।
वैषम्यं वैति, मुञ्चेत्तु स द्वाविंशतिवासरैः ॥
द्वाचत्वारिंशता घस्रैः क्वचिद् वा मुञ्चति ज्वरः ।
क्रमारोहावरोहाभ्यां पुनर्दर्शितलक्षणः ॥
दशाहात् परतः क्वापि दारुणो रक्तनिःस्रवः ।
सोऽतिकृच्छ्रो भवेज्जातु ततोऽप्यारोग्यसम्भवः ॥

म्रियते चातुर इति बोध्यम् । तुर्य्ये चतुर्थे । ज्वरावरोहणञ्च द्वेधा भवति, शनैः सोपानावलिन्यायेन ( द्रष्टव्यं १म चित्रम् ), वैषम्येण विषमगत्या वा । सर्वथा ज्वरमोक्षश्च प्रायशो द्वाविंशतिदिनैरष्टाविंशतिदिनैर्वा । क्वचित्तु द्वाचत्वारिंशता घस्रैर्दिनैः । तादृशस्थले अष्टाविंशतिदिनानन्तरं ज्वरस्य पुनरपि पूर्ववत् क्रमारोहावरोहाभ्यां प्रवृत्तिः । दशाहादिति । दशाहादारभ्य द्वाचत्वारिंशद्दिनावधि । क्वचिदन्त्रक्षतेभ्यो दारुणो रक्तनिःस्रवो भवति तेन सहसा नाड़ीलोपः प्रायेण मरणञ्च । तदुच्यते सोऽतिकृच्छ्र इति । क्वचिदारोग्यदर्शनं हि चिकित्साकौशलात्तत्रापि भवत्येव ।

( द्वितीय चित्रम् )



[ आन्त्रिकसन्निपाते क्षुद्रान्त्राभ्यन्तरस्थानि क्षतानि तद्रोगमृतस्य अन्त्रविपाटनेन दर्शितानि । ]

सन्निपातज्वरान्तोक्तं बाधिर्य्यादि च वैकृतम् ।
कस्यापि जायते, तच्च प्रायः शाम्यत्युपक्रमात् ॥ ८ ॥

## अथ ग्रन्थिकज्वरः ।

( परिचयः )

प्रायो वंक्षणकक्षादिग्रन्थिशोफरुजाकरः ।
ग्रन्थिकाख्यो जनपदोद्ध्वंसी घोरतरो ज्वरः ॥
तुल्येऽपि हेतौ स क्वापि भृशं फुस्फुसदूषणात् ।
सद्यः शोणितनिःष्ठेवश्वासकासैर्हरेदसून् ॥
अथवा सर्वथा सर्वधातून् द्रागभिदूषयन् ।
सन्निपातसमैर्लिङ्गैः सोऽग्रन्थिमपि मारयेत् ॥

---

अन्यच्च बाधिर्य्यमूकतादि सन्निपातज्वरान्तेभावि वैकृतं यत्पूर्वमुक्तं तदिहापि दृश्यते इत्याह **सन्निपातेति** । तच्च वैकृतम् विकृतावस्था । उपक्रमात् चिकित्सया प्रायः शाम्यति अपयाति । कस्यचित् किञ्चित्तिष्ठति, नापि शाम्यति वेति प्रायःपदेन निर्देशः । इदञ्चाग्रेऽपि सर्वेषु तीव्रविषाभिषङ्गज्वरेषु योज्यम् ।

अथ द्वितीयं ग्रन्थिकाख्यं विषाभिषङ्गज्वरमाह—**प्राय इति** । वंक्षणं नाम उरूदरयोः सन्धिस्थानम्, कक्षा तु बाहूरसोः सन्धिः । वंक्षणादिस्थानेषु च स्वाभाविकावस्थाना ग्रन्थयो गुञ्जानिम्बफलाद्याकारास्तेषु केषाञ्चित् शोफः शूनता रुजा पीड़ा च, तयोः करः । आदिशब्देन ग्रीवाकफोणिजानुसन्धिष्वपि क्वचित् । प्राय इत्युक्तेः क्वचिद् विनापि ग्रन्थिशोथं वक्ष्यमाणफुस्फुसादिदूषणमुखेन भवत्येवासौ ज्वर इति सूच्यते । ग्रन्थिकसंज्ञा च प्रायोभाविप्रधानलिङ्गनिबन्धना, प्राधान्येन हि व्यपदेशा भवन्तीति न्यायात् । तेन अग्रन्थिकेऽपि ग्रन्थिकसंज्ञा न विरुध्यते, तुल्यहेतुत्वात् । अतएव क्वाचित्कं विशिष्टप्रकारभेदद्वयमाह—तुल्येऽपि हेताविति । क्वापि नतु प्रायः । भृशं फुस्फुसदूषणात् युगपदुभयोः फुस्फुसयो विषसंक्रमात् । अथास्य फुस्फुसाक्रामिणो ग्रन्थिकज्वरस्य लिङ्गान्याह प्रथमत एव सूचीकटाहन्यायेन—सद्य

---

* अस्य इं० नाम —Plague ( प्लेग ) इति ।

( निदानम् )

निदानमत्र सामान्यं सङ्कुलावसथादिकम्।
विशिष्टं तु विषं रक्तचरं जीवाणुसम्भवम्॥
ते स्पर्शश्वसनादिभ्यः संक्रामन्ति नरान्नरम्।
भूम्ना तद्रोगजुष्टेभ्यो मूषिकेभ्यश्च संक्रमः॥

---

इति। शोणितनिःष्ठेवः श्वासः कासश्चेति लिङ्गत्रयं प्रधानं तैर्लिङ्गैरुपलक्षितस्य रोगिणः असून् प्राणान् सद्यो हरेदेष ज्वरः। सद्यः तस्मिन्नेव दिने क्वचिद् द्वित्रैर्दिनैर्वा। घोरतमं चरमं प्रकारमाह—अग्रवेति। द्राग् झटिति। अग्रन्थिमपि किमुत सग्रन्थिम्। ग्रन्थिशोथादर्शनञ्च विषस्य युगपत् सर्वदेहव्यापित्वेन ग्रन्थिष्ववरोधाभावात्। ग्रन्थिशोथो हि विषस्य ग्रन्थिषु अवरुद्धत्वादेव भवतीति शारीरविज्ञानविदः। एवञ्च त्रिप्रकारकोऽसौ ग्रन्थिकज्वरः सम्भवतीति स्मर्त्तव्यम्।

ग्रन्थिकज्वरनिदानमाह—निदानमिति। सङ्कुलं बहुजनसङ्कुलम् आवसथादिकं गृहग्रामादिकं। तदेतत् सामान्यं निदानम्। विशिष्टं निदानमाह—विशिष्टं त्विति। ग्रन्थिकप्रदजीवाणुसमुत्थं हि तीव्रं विषं रक्तचरं विशिष्टं निदानम्, सर्वत्र ग्रन्थिकरोगिणां ग्रन्थिषु शोणितादौ च तद्दर्शनात्, परीक्षार्थं देहान्तरे संक्रमितैस्तैर्ग्रन्थिकरोगोत्पत्तेश्च। * ते च जीवाणवः स्पर्शात् करचरणादिषु अदृश्यक्षतादिद्वारेण, श्वसनात् तद्रोगिणो निःश्वासवायुग्रहणात्, आदिपदेन तद्भुक्तावशेषभक्षणादेश्च। भूम्ना प्राचुर्य्येण। मूषिकादिभ्यः संक्रमश्चैवम्, तद्रोगाक्रान्ताश्च तद्रोगमृताश्च शतशो मूषिकास्तज्जीवाणूनामाकरभूता भूमिं दूषयन्ति। तथाच नग्नपादविचारिणां स्फुटितचरणतलादिद्वारेण, तन्निहमक्षिकादिभिः खाद्यादिदूषणेन वा जीवाणूनां संक्रमः।

अथ मन्यसे—अग्निरोहिण्याख्यः प्राचीनाचार्य्यैरुक्तो रोगस्त्वदुक्तग्रन्थिकज्वरादभिन्न एवेति किमनया नवीनकल्पनया, यदुक्तं—"कक्षभागेषु ये स्फोटा जायन्ते

---

* अस्ति च पाश्चात्यनये परीक्षाचतुष्टयं ( Koch's Law ) जीवाणुकारणतासाधनाय। तद्यथा—(१) तत्तद्रोगिषु तत्तज्जीवाणूनामवश्यदर्शनमिति प्रथमा परीक्षा। (२) तत्तज्जीवाणूनां रोगिशरीराद्बहिर्मांसयूषादौ संक्रमितानां पुनः पुनरभिवृद्धिरिति द्वितीया। (३) तथा अभिवृद्धानां जीवाणूनां स्वस्थदेहेषु संक्रमणात् पुनस्तद्रोगोत्पत्तिरिति तृतीया। (४) तादृशरोगिदेहात् पुनस्तज्जीवाणूनां लाभः, पुनर्मांसयूषादौ अभिवृद्धिश्चेति चतुर्थी। एतत्परीक्षाचतुष्टयसमुत्तीर्णानामेव जीवाणूनां कारणता स्वीक्रियते पाश्चात्यैः, नान्येषामित्यवधेयम्।

( रूपम् )

आदावेव ज्वरस्तीव्रः क्वचिन्मन्दोऽथवा पुनः।
भृशं स्रस्ताङ्गता तृष्णा प्रलापो मूर्च्छनं भ्रमः।
निद्रानाशोऽरतिर्मोहो मत्तवत् कोऽपि ताम्यति।
शेते विसंज्ञो वाप्यन्यो यथाऽभिन्यासपीड़ितः॥
दग्धवत् कर्कशा जिह्वा धमनी शिथिला भृशम्॥
ग्रन्थौ शोफः क्वचित् पूर्व्वं क्वचिन्मध्ये क्वचिच्चिरात्।
तोदः स्पर्शाऽसहत्वञ्च ग्रन्थौ पाकश्चिरादपि॥
द्वित्रैर्वा पञ्चषैर्वापि दशभिर्वा दिनैः क्वचित्।
सद्यो वा म्रियते रोगी चिराद्वा कोऽपि सिध्यति॥

---

मांसदारणाः। अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः॥ सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवं। तामग्निरोहिणीं विद्यादसाध्यां सर्व्वदोषजाम्॥"—इति। तत्र ब्रूमः। अग्निरोहिण्याख्यक्षुद्ररोगे स्फोटानां मांसदारणानां सम्भवः, सप्ताहादिना च मृत्युः। इह तु ग्रन्थिभिरुदीर्णैरपच्यमानैरेव सान्निपातिकज्वरवतः प्रायः शीघ्रतरं मरणम्, ग्रन्थिपाके तु बहूनामारोग्यलाभ एव प्रायः—इति भेदः। वस्तुतस्तु अग्निरोहिण्येव कालान्तरेण ग्रन्थिकाख्ये ज्वरे विपरिणतेति सुवचम्।

वैशेष्याभावात् पूर्वरूपमनुक्त्वा ग्रन्थिकज्वरस्य प्रायिकं रूपमाह—**आदावेव** इति। सर्व्वत्र पूर्व्वं तीव्रो ज्वरो भवति, मन्दो वा भवति, क्वचित् कम्पादिपूर्वो वा भवति। ग्रन्थिशोफश्च क्वचित् प्रथमदिन एव दृश्यते, क्वचित् रोगमध्ये, क्वचिदन्ते वा—इत्यनुपदं वक्ष्यति। स्रस्ताङ्गता शिथिलाङ्गता। मत्तवत् ताम्यति उच्चैः शब्दायते, उत्थाय वा धावति। धमनी अङ्गुष्ठमूलगा शिथिला कोमलस्पर्शा, द्रुता विशेषेण चञ्चला। तोदः सूचीवेधवत् पीड़ा। स्पर्शाऽसहत्वं स्पर्शमात्रेण तीव्रवेदनाविशेषः। तच्चेह विशिष्टं भेदकं लिङ्गमिति स्मर्त्तव्यम्। यत्र तु ग्रन्थौ पाकस्तत्र प्रायेण रोगी जीवतीति विशेषः। द्वित्रैः द्वाभ्यां त्रिभिर्वा. पञ्चषैः पञ्चभिः षड्भिर्वा। दशभिरिति प्रायिकः कालसीमानिर्द्देशस्तेन दशदिनानन्तरं जीवनाशा कर्त्तव्या।

( उपद्रवः )

मूत्रविरोधः कासश्च तथातीसार उल्वणः।
छर्दिश्च रक्तपित्तञ्च ग्रन्थिके स्युरुपद्रवाः॥

( साध्यलक्षणम् )

ग्रन्थीनां शीघ्रपाकेन बहूनां वा समुद्भवात्।
जरन् वा बालको वाऽपि रोगी जीवेत् कथञ्चन॥

( अरिष्टलक्षणम् )

शीघ्रमिन्द्रियनाशेन सद्यः संज्ञाक्षयेण वा।
अतीसारेण वाऽऽक्रान्तो ग्रन्थिरोगी न जीवति॥
अकृष्णं सकफं रक्तं ष्ठीवेद् यः श्वासपीड़ितः।
आक्रान्तफुसफुसः सोऽयमसाध्यः सर्व्वथा स्मृतः॥
अग्रन्थिर्ग्रन्थिकोक्तैश्च लिङ्गैर्युक्तो यमातिथिः॥

---

क्रान्तिकानुपद्रवानाह—**मूत्रावरोध** इति। कासः फुसफुसाऽऽक्रमणात्, अतीसारोऽन्त्राणामाक्रमणात्, रक्तपित्तञ्च फुसफुसाक्रमणादेव प्रायः क्वचिदन्यतोऽपि वा मार्गात्। एतानि च सर्व्वाणि लिङ्गानि युगपत् प्रादुर्भूतानि सर्व्वथा असाध्यतामेव ख्यापयन्ति।

साध्यलक्षणमाह—**ग्रन्थीना**मिति। बहुवचनमतन्त्रं, तेनैको ग्रन्थिः ग्रन्थिद्वयं बहवो वा ग्रन्थयो यदा शीघ्रं पच्यन्ते तदापि साध्यता। यत्र च रोगी वृद्धो वा बालो वा न तु युवा, तदाऽपि साध्यता सत्येव ग्रन्थिपाके। कथञ्चनेति कृच्छ्रसाध्यतैव दर्शिता आरोग्यमान्द्यञ्च। सुखसाध्यता तस्य नास्त्येव।

अरिष्टलक्षणान्याह—**शीघ्र**मिति। इन्द्रियनाशेन श्रवणादिशक्तिलोपेन। सद्यः, प्रथमे दिवसे द्वितीये वा संज्ञालोपेन। तदेतद् एकैकमपि सर्व्वथाऽसाध्यतां सूचयति।

अथ द्वितीयमसाध्यलक्षणमाह—**अकृष्ण**मिति। अकृष्णं सिन्दूरसदृशम्। वक्ष्यमाणे श्वसनकज्वरे तु कृष्णाभरक्तं ष्ठीवति, जीवति च यथार्होपक्रमेणेति विशेषः। सोऽयं द्वितीयः प्रकारभेदो ग्रन्थिकज्वरस्य। अग्रन्थिरिति। बहिर्दृश्यग्रन्थिशोफोऽप्यन्यैर्लिङ्गैरुपद्रुतः, सोऽपि यमातिथिर्मुमूर्षुः। वस्तुतस्तु अभ्यन्तरतो ग्रन्थयस्तत्रापि भूयस्त एवेति शवच्छेदनायां प्रत्यक्षम्।

## अथ श्लेष्मकज्वरः ।*

प्रादुःषन्तीह यत् प्रायः श्लेष्मजोपद्रवा भृशम् ।
ततो जनपदोद्ध्वंसी ज्वरोऽसौ श्लेष्मकः स्मृतः ॥

( निदानम् )

वायुवाहितजीवाणुविषं युगपदञ्जसा ।
लोकेषु प्रसृतं प्रायः श्वासमार्गेण तं ज्वरम् ।
विदधाति, क्वचिद्वाऽथ भुक्तमार्गेण संक्रमः ।
जनाज्जने च संक्रान्तिः श्वसनादिनिमित्ततः ॥

( सम्प्राप्तिः )

प्रायश्चास्य विकाराः स्युः श्वासयन्त्रे, क्वचित् पुनः ।
अन्नमार्गे समग्रेऽपि क्वापि वा सर्वधातुषु ॥

---

अथ विषाभिषङ्गजं श्लेष्मकाख्यमागन्तुज्वरविशेषं वर्णयिष्यन् संज्ञाबीजमाह **प्रादुःषन्तीति** । इहास्मिन् ज्वरे यत् यस्मात् श्लेष्मजोपद्रवा एव प्रायो भृशं प्रादुर्भवन्ति ततः श्लेष्मकाख्योऽसौ ज्वरः । जनपदोद्ध्वंसीति महामारीरूपेणास्य प्रादुर्भावं † स्मारयति । निदानमाह—वायुवाहित इति । युगपद् बहुषु जनेष्वेककालम्, अञ्जसा झटिति । तथाहि अधर्म्मवशाद् विशेषेण दूषिते वायुमण्डले अकस्मादेव तज्जीवाणूनां सृष्टिः, श्वासमार्गेण तेषां जीवाणूनां लोकेषु प्रवर्त्तनाच्च तद्विषप्रसरश्चेत्यभिप्रायः । ननु अजीवाज्जीवसृष्टिः कथं सम्भवतीति चेत्, आद्यसर्गे स्वीकरणीयैव सा, अन्यथा युगपन्नानादेशेषु तत् प्रादुर्भावाऽसम्भवात् । काले तु जनाज्जने संक्रान्तिरपि भवत्येव । भुक्तमार्गः मुखगलादिः । सम्प्राप्तिमाह **प्रायश्चेति** । श्वासयन्त्रं सश्वासपथं फुस्फुसद्वयं, तत्र विकाराः व्रणशोथादयः कफपूर्णता च वायुनलिकानां, येन श्वसनाख्यज्वरलिङ्गैःसदृशानि क्वचिद् रक्तष्ठीव-

---

* अस्य इं० नाम—इनफ्लुयेन्जा ( Influenza ) इति ।

† अतिघोरमहामारीरूपेण हि प्रादुरभूदयं ज्वरः सं १८७५ ७६ वर्षयोः, येन समग्रेऽपि भूमण्डले लक्षशो मृता मनुजाः ; पूर्वमपि वारत्रयमिदं बभूवेत्याहुरितिहासविदः ; परं घोरतमा तु महामारी साम्प्रतमेव प्रावर्त्तत ।

कफवातोल्वणं त्वेव सन्निपातमुदीरयत् ।
विषं धातून् विकुरुते हन्ति तेन सहस्रशः ॥

( रूपम् )

प्रतिश्यायः शिरःशूलं शीतकम्पौ च कुत्रचित् ।
अङ्गमर्दः कटीपृष्ठोरसां तीव्राश्च वेदनाः ।
कासो ज्वरोऽवसादश्च कार्श्यञ्चाल्पैर्दिनैर्भृशम् ।
अत्यर्थंबलहानिश्च लिङ्गानि श्लेष्मके ज्वरे ।
सामान्यतो, विशेषात्तु फुस्फुसाक्रमणे सति ।
सरक्तं ष्ठीवनं प्रायः प्रलापः श्वसनन्तथा ॥
अथान्नमार्गे त्वाक्रान्ते वम्यतीसारयोर्द्वयोः ।
एकस्य वा प्रवृत्तिः स्यात् शूलं क्वापिच कामला ॥
अत्यर्थंविषयोगेण सर्वधातुप्रदूषणात् ।
अभिन्याससमं क्वापि रूपं तस्मान्न मुच्यते ॥
नैरुज्यं स्वल्प दोषस्य शीघ्रं यद्यपि जायते ।
बलहानिश्चिरायैव कृच्छ्रात्तु बहुदोषता ॥

---

नादीन्यपि लिङ्गानि । अन्नमार्गे समग्रेऽपीति—आमाशयपक्वाशययोः व्रणशोथवत् पीड़ा, ततो वमेरतीसारस्य च युगपदेकैकशो वा प्रवृत्तिरिति वक्ष्यते । अन्यत् स्पष्टम् ।

श्लेष्मकज्वरलिङ्गान्याह—प्रतिश्याय इति। प्रतिश्यायो नासामार्गेण जलवत् श्लेष्मनिःस्रवो नेत्ररागादि सहितः । कुत्रचिदित्युक्तेः सर्वत्र शीतकम्पौ न भवतः । कार्श्यञ्चाल्पैर्दिनैरिति । विशिष्टलिङ्गमेतद्द्वयं पश्चपैर्वाह्योभिः कृशताविशेषः, अत्यर्थंबलहानिश्चेति । बलहानिश्च सर्वासामेव पेशीनां विशेषेण तु हृदयन्त्रस्येति स्मर्त्तव्यम् । तेन क्वचिद् हृदयन्त्रस्य अवसादान्मृत्युः । सामान्यत इति पूर्वेण योज्यम् । सरक्तमिति प्रायिकं, बहुधा नापि दृश्यते रक्तम् । उभयफुस्फुसाक्रमणमेव च श्लेष्मकज्वरे भूयो दृश्यते। अथान्नमार्गे इति। अन्नमार्गाक्रमणान्तु क्वचिदेव।

## अथ सान्धिकज्वरः ।*

( परिचयः )

व्रणशोथरुजातोदैः सन्धीनापीडयन् भृशम् ।
ज्वरो घोरः सहृद्रोगः सन्धिको नाम कथ्यते ॥

( निदानं सम्प्राप्तिश्च )

हेमन्ते शिशिरे चर्त्तौ बाल्ये वा यौवनेऽपि वा ।
निःशङ्कशीतवर्षादिसेवयाऽपचिते बले ।
विषं जीवाणुसम्भूतं धातुषु प्रसृतं गलात् ।
वातपित्तोल्वणं देहे सन्निपातमुदीरयेत् ।
ततश्च परितः सन्धीन् व्रणशोथोऽतिदारुणः ।
अन्तःसन्धि बलासस्य वर्द्धमानो विदह्यते ।

---

वम्यतीसारयोश्च विषभक्षणलिङ्गसादृश्यं स्पष्टं, कामला तु वम्यतीसारनिवृत्तौ दृश्यते, अपयाति च शीघ्रमेव सम्यगुपक्रमेण । कदाचित्तु सर्वाशयानामाक्रमणमपि दृश्यते युगपत् ।

अथ सन्धिकज्वरस्य संज्ञाबीजं परिचयमुखेनाह—**व्रणशोथेति** । व्रणशोथो विदह्यमानता पाकाभिमुखावस्था नतु पाकः । रुजा: आर्त्तयः । तोदः सूचीवेधवद् व्यथा । सन्धीनस्थिसन्धीन् । सहृद्रोग इति प्रायः, कदाचिदहृद्रोगोऽपि भवत्येव सन्धिकः ।

निदानमाह—**हेमन्त इति** । हेमन्ते शीतारम्भे शिशिरे शीते च ऋतौ । बाल्ये कुमारावस्थायाम् । अतिशिशोस्तु वर्षद्वयादर्वाग् न भवति सन्धिक इति केचित् । बले अपचिते क्षीणे । गलादिति कण्ठमार्गमाश्रित्य विशेषतश्च कण्ठशालूकाभ्यामिति केचित् । सम्प्राप्तिमाह—**वातपित्तोल्वणमिति** । इदञ्च व्रणशोथतोदभेदादिभिरनुमेयम् । त्रिदोषलिङ्गानि च भूयांस्येव दृश्यन्ते । अन्तःसन्धि सन्धीनामन्तः । बलासः श्लेष्मा इह श्लेषकाख्यः, स व्रणशोथादेव हेतोर्वर्द्धमानो

---

* सन्धिकज्वरस्य आंग्लभाषानाम—"रियुमाटिक् फीवर" (Rheumatic Fever).

अभितो हृदयं किञ्च सञ्चयोऽपां कलापुटे।
हृन्मध्ये हृत्कपाटे वा विकारा व्रणशोथजाः।
फुस्फुसच्छदशोथोऽपि क्वचित् सव्ये प्रजायते।
फुस्फुसाक्रमणं वाऽपि श्वासकासादिलक्षणम्।

( रूपम् )

ज्वरः साधारणः पूर्वं सन्धिशोथस्ततः क्रमात्।
भृशं स्वेदो रुजास्तीव्रा मूत्राल्पत्वं हृदि व्यथा।
सान्निपातिकलिङ्गानां केषाञ्चन च दर्शनम्।
ज्वरोऽतिघोरः कुत्रापि प्राणहृत् सोऽनुपक्रमात्॥
यूनां सन्धिषु बालानां हृदये च विशेषतः।
विकाराः प्रायशो दृश्याः सन्धिकाख्ये ज्वरे ध्रुवम्॥
अथोपक्रमनैपुण्याल्लाघवाद् वा विषस्य चेत्।
जीवति द्वित्रसप्ताहान् हृद्रोगी प्रायशस्तु सः॥
पुनरावर्त्तते चापि केषाञ्चित् सन्धिको ज्वरः।
सन्धिशोथादियुक् तस्मान् मन्दमारोग्यमश्नुते॥

---

विदह्यते परिमाणाधिकः सन् पच्यमान इव भवति नतु पच्यते। सन्धीन् परित इति "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि"—इति द्वितीया।

अथ सन्धिकज्वरे प्रायोभाविनो हृदयन्त्रविकारानाह—**अभित इति।** हृदयमभितः स्थिते कलापुटे हृदयच्छदाख्ये अपां जलस्य व्रणशोथोद्भवलसीकारूपस्य सञ्चयः। ततश्च हेतो हृदिव्यथा वक्ष्यमाणा प्रायः, हृदयन्त्रस्य स्वस्थानच्युतिश्च। अथवा हृन्मध्ये हृत्पेश्यां हृदन्तर्गुहावरण्यां कलायाञ्च, हृत्कपाटे हृत्प्रकोष्ठानां द्वारभूतेषु तनुकलावृतमांसपत्रकेषु वा (जातावेकवचनम्) व्रणशोथजा विकाराः सङ्कोच-संहनननाङ्कुरोद्गमादय। किञ्च फुस्फुसच्छदस्य तदाख्यकलाया अपि क्वचित् शोथः, स च प्रायः सव्ये वामे पार्श्वे दृश्यते हृदयन्त्रसान्निध्यात्। क्वचित् फुस्फुसाक्रमणं वा, व्रणशोथस्य तत्रापि प्रसरणात्।

सन्धिकज्वररूपमाह—**ज्वर इति।** साधारणः नातितीव्रः सामान्य-

हृद्रोगादायतौ दुःखं प्रायः सर्वस्य जायते।
स श्रमश्वासशोथाद्यैः सीदन् काले जहात्यसून्॥

## अथ श्वसनकज्वरः।*

लाक्षारसाभं यः ष्ठीवेद् रक्तं श्वासज्वरार्द्दितः।
स्यात्फुस्फुसमूलस्य तस्य श्वसनको ज्वरः॥

लक्षणञ्च। ततः क्रमात् द्वित्रिचतुर्दिनैः सन्धिशोथः पूर्व्वोक्तप्रकारः। भृशं स्वेद इति विशिष्टं लिङ्गं सार्त्तयम्। हृदि व्यथा पूर्व्वोक्तविकारारम्भात् प्रायेण। सान्निपातिकलिङ्गानां श्वासकासप्रलापादीनां केषाञ्चन नतु बहूनाम्। ज्वरोऽतिघोर इति अतितीव्रसन्तापः (१०६-१०७) कुत्रापि नतु सर्वत्र। स च चानुपक्रमात् सुशीतजलसेकावगाहादि विना प्राणहृत् प्राणान्तकः।

अथ वर्णितानां विकाराणां प्रायोदृष्टं विशेषमाह—यूनामिति—यूनां सन्धिषु बालानां तु विशेषतो हृदये हृदन्ते विकारा भवन्ति। ध्रुवं निश्चितम्। अत्र वर्षद्वयादूर्द्ध्वमाषोडशवर्षाद्बालः, ततः परमात्रिंशतो युवेति ग्रन्थकर्त्तुरभिप्रायः। यद्यपि प्राचां ग्रन्थेषु अन्यथा बाल्ययौवनयोर्निर्देशः, तथापि इदानीन्तनजनायुर्दर्शनादेवं वयःप्रविभागो न दोषाय।

आरोग्यकालं कृच्छ्रसाध्यताञ्चाह अथेति। अथ चेद् यदि उपक्रमनैपुण्यात् चिकित्साकौशलात्, विषस्य सन्धिकज्वरकरस्य जीवाणुविषस्य लाघवात् मात्रालघुत्वात्, रोगिणः स्वाभाविकप्रतापेनतया विषस्य दुर्बलत्वाद् वा जीवति रोगी, तदा स प्रायेणो हृद्रोगी तु भवत्येव।

सन्धिकज्वरस्य आरोग्योन्मुखावस्थायामपि पुनरावृत्तिशीलतामाह पुनरिति। पुष्कलकारणं विनापि पुनरावर्त्तनं रोगस्वभाव एव। तस्मात् पुनरावृत्तात् सन्धिकज्वरात्, मन्दम् शनैः शनैः। एवञ्च कदाचिन्मासं मासद्वयं वा विरुज्यते रोगी।

अथ हृद्रोगस्य परिणाममाह—**हृद्रोगादिति**। आयतौ उत्तरकाले प्रायः कतिचिन्मासानन्तरं वर्षानन्तरम् वा। श्रमजः श्वासः श्रमश्वासः। सीदन् क्रमशो हीनबलीभवन् स रोगी काले कतिचिद्वर्षानन्तरम् असून् जहाति म्रियते।

अथ विषाभिषङ्गज्वरं श्वसनकं नाम परिचाययति **लाक्षारसेति**—

* अस्य आङ्गलभाषानाम—[ Pneumonia ] 'न्युमोनिया' इति।

( निदानम् )

> समाच्छादनहीनानां दुर्बलानां विशेषतः।
> दीनानां दूनचित्तानां शीतवर्षादिबाधनात्।
> अभिघातात् क्वचित् पूतिगन्धयोगेन कुत्रचित्।
> क्वचिद्वा व्याधिनाऽनेन पीड़ितस्याऽतिसङ्गमात्॥
> सर्व्वेष्वृतुषु भूम्ना तु वर्षासु शिशिरे मधौ।
> ज्वरः प्रादुर्भवत्येष जीवाणुविषसम्भवः।

लाक्षारसाभं लाक्षारसवत् मरूणरक्तवर्णं, तदेतद् भेदकं लिङ्गम्। उज्ज्वल-रक्तष्ठेविनस्तु पुंसो रक्तमुरःक्षतक्षयादिजनितं मन्तव्यं प्रायः। असाध्येषु ग्रन्थिकादि-सन्निपातविशेषेष्वपि उज्ज्वलरक्तमेव ष्ठीवति। श्वासज्वराद्दितः द्रुतश्वासेन ज्वरेण च विशेषेण पीड़ितः। तदेतच्चितयं युगपद् वर्त्तमानं मपश्येव श्वसनकाख्यं सन्नि-पातं ख्यापयति। यत्र तु क्वचिद् रक्तष्ठीवनं नापि विद्यते, तत्रापि फुसफुसपरी-क्षया तम्मूलस्य संहतीभावः परिज्ञायते। परीक्षा चेयमाकर्णनेन प्रतीघात-शब्द श्रवणेन च क्रियते। तत्राऽकर्णने नाड़ीधमनवच्छब्दः[1] बुद्बुदोद्गमध्वनिश्च फुस्फुसमूले श्रूयते, अङ्गुल्या प्रतीघाते च पाषाणप्रतीघातवद्ध्वनिः। ततश्चोक्तं स्त्यानफुसफुसमूलस्येति। स्त्यानत्वञ्च स्त्यानावनद्धघनलसीकादिना तत्रत्यवायु-कोषाणामवरोधाद् व्रणशोथजम्। श्वसनयन्त्राक्रमणाच्च श्वसनकसंज्ञानिष्पत्तिः। सोऽयं ज्वरः किञ्चिदन्यविधलक्षणो[2] भावमिश्रेण तन्त्रान्तरात् कर्कटकनाम्ना समुद्धृतः। यथा—"इषुणेवाहतं पार्श्वं तुद्यते खन्यते हृदि। प्रमीलकः श्वासहिक्का वर्द्धते तु दिने दिने॥ जिह्वा दग्धा खरस्पर्शा गलः शूकैरिवावृतः। विसर्गं नाभिजानाति कूजेच्चापि कपोतवत्॥ अतीव श्लेष्मणा पूर्णः शुष्कवक्त्रोष्ठ-तालुकः। तन्द्रानिद्रातियोगार्त्तो हतवाङ् निहतद्युतिः॥ न रतिं लभते नित्यं विपरीतानि चेच्छति। आयम्यते च बहुशो रक्तं ष्ठीवति चाल्पशः॥ एष कर्कटको नाम्ना सन्निपातः सुदारुणः।" इति ( भाव प्र॰ )। यद्यपि रक्तष्ठीवनं श्वसनके ज्वरे क्वचिन्नापि दृश्यते, तथापि प्रायिकलक्षणमिदं बालाना-मपि परिचयाय पर्य्याप्तमित्यभिहितमादित एव।

निदानमाह—**समाच्छादनेति**। दूनचित्तानां शोकादिग्लानमनसाम्। भूम्ना प्राचुर्य्येण। शिशिरे शीतर्त्तौ, मधौ वसन्ते। अन्यत् स्पष्टम्।

---

१ Tubular Breathing. २ अन्यविधलक्षणत्वञ्च तत्र नियमेन हिक्कादिदर्शनात्।

( सम्प्राप्तिः )

संहत्यासृङ् मूलतः फुस्फुसस्या-
ऽसव्ये पार्श्वे सव्यतो वा द्वयोर्वा ।
जिघांसन्ति श्वासयन्त्रं विषोत्था
दोषास्तस्माच्छ्वासकष्टं ज्वरश्च ॥

( पूर्व्वरूपम् )

पार्श्वार्त्तिः श्वासकासौ च क्वचित् कम्पोऽवसन्नता ।
प्राग्रूपमाहुर्निपुणाः प्रायः श्वसनके ज्वरे ॥

( रूपम् )

प्राक् प्रायः शीतमत्यर्थं ज्वरस्तीव्रोऽरुचिस्तथा ।
पार्श्वशूलमथो कासः श्वासवृद्धिः क्रमेण च ॥
कासतः शोणितं श्यामं मुहुः सान्द्रं प्रवर्त्तते ।
श्वसतो नासिकापार्श्वौ स्फूर्जतश्च निरन्तरम् ॥

---

अथ श्वसनकज्वरस्य सम्प्राप्तिमाह **संहत्येति** । असव्ये दक्षिणे पार्श्वे सव्ये वामे वा पार्श्वे उभयतो द्वयोर्वा पार्श्वयोः फुस्फुसस्य मूलतोऽसृगग्रक्तं संहत्य उपलक्षणात् दुष्टशोणितं लसीकां च स्त्यानीकृत्य । विषोत्थाः श्वासमार्गेषु लब्धप्रवेशजीवाणुविषप्रभावप्रकोपिता दोषा वातादयः श्वासयन्त्रं फुस्फुसं जिघांसन्ति हन्तुमिच्छन्ति, न तु नियमेन घ्नन्ति । ततः कारणात् श्वासकष्टादि बहु-सान्निपातिकलक्षणसमन्वितो ज्वरः श्वसनको नाम प्रवर्त्तते । प्रायेणादौ दक्षिणपार्श्व एव फुस्फुससंहतोभावो भवतीति दक्षिणपार्श्वस्याऽदौ निर्देशः ।

पूर्व्वरूपमाह **पार्श्वार्त्तिरिति** । यस्मिन् फुस्फुसे व्रणशोथस्तत्रैवार्त्तिः फुस्फुसच्छदकलायां व्रणशोथस्य प्रसर्पणात् । ततश्च क्वचिज्ज्वलसत्त्वयोऽपि । अन्यत् स्पष्टम् ।

रूपमाह **प्रागिति**—प्राय इत्युक्तेः क्वचित् शीतं नापि भवति । तीव्र-ज्वरादयस्तु भवन्त्येव । क्रमेण श्वासवृद्धिरिति यथा यथा फुस्फुसमूलमाक्रम्यते ऽधिकतरं दोषैस्तथा तथा दुःश्वासता भवतीत्यभिसन्धिः । कासतः पुरुषस्य श्यामं लाक्षारसाभं सान्द्रं बहलं शोणितं मुहुर्वारंवारं प्रवर्त्तते । श्वसतः पुरुषस्य

स्वेदो ललाटे गात्राणि भृशं स्विद्यन्ति चानिशम् ।
गौरसर्षपवत् स्वेदपिड़कानाञ्च दर्शनम् ॥
दौर्व्वल्यं सदनं मोहः प्रलापः कण्ठकूजनम् ।
परुषा कर्कशा जिह्वा मलिना च भवेद् भृशम् ॥
धमनी युग्मतामेति कोमला स्थूलचञ्चला ।
यावन्न ज्वरमुक्तिः स्याद्, ज्वरमुक्तेरनन्तरम् ।
विशेषान् मन्दतामेति रोगेऽस्मिन्निति निश्चयः ॥
सप्तमे दिवसे प्रायश्चाष्टमे नवमेऽथवा ।
अकस्माज्ज्वरनिर्मुक्तिः स्वेदप्राचुर्य्यमेव च ॥
प्राणा वा तत्र मुच्यन्ते रोगी वा तत्र मुच्यते ।
मुच्यमानस्तु नैरुज्यं शीघ्रमेव समश्नुते ॥

नासिकापार्श्वौ विशेषेण स्फुर्ज्जतः कम्पेते, तच्चेदमपरं निश्चयप्रदं लिङ्गं स्मर्त्तव्यम् । अन्यत् स्पष्टम् ।

धमनीपरीक्षामाह **धमनीति**—युग्मतामेति युग्मेन द्विर्द्विराहत्य[१] चलति प्रायः । कोमलादिपदानामर्था रोगपरीक्षाप्रकरणे वर्णिताः । एवंविधा च धमनी यावज्ज्वरनिर्मुक्तिर्न भवति सप्तमे अष्टमे नवमे वा दिने, तावदेव दृश्यते । ज्वर-निर्मुक्तौ तु विशेषान् मन्दतामेति, स्वाभाविकगतेरपि मन्दतरगतिर्भवतीति विशेषः । अन्यत् स्पष्टम् ।

**सप्तमे** इति । यद्यपि सर्वसन्निपातानामिदं प्रायिकं लिङ्गं, तथापि श्वसनकसन्निपातस्य विशेषतस्तथेति पुनरुक्तं, क्वचित् पुनरिह ग्रन्थैरपि ज्वरमुक्तिः । स्वेदप्राचुर्य्यमिति । स्वेदप्राचुर्य्येण हिमाङ्गता क्वचिन्नाड़ीलोपश्च भवति, परं सम्यक्चिकित्सया जीवति रोगी बहुशः । प्राणा वेति सङ्कटामवस्थां दर्शयति । नैरुज्यमारोग्यम् । तच्च प्रायः पक्षेण मासेन वा भवति फुस्फुसस्य स्वाभाविकावस्था प्राप्तेः ।

१ Dicrotic pulse.

( साध्यासाध्यलक्षणम् )

एकतः फुसफुसे दुष्टे ज्वरेऽतीव्रे स्थिते बले।
सम्यक् पादत्रये लब्धे मन्तव्या सुखसाध्यता॥
खेदो भृशं ज्वरस्तीव्रो वृद्धः क्षीणोऽथवातुरः।
पादत्रयस्य सम्पत्त्या स तु जीवेत् कदाचन॥

( अरिष्टलक्षणम् )

द्वाविव फुसफुसौ दुष्टौ समग्रो यस्य वैकृतः।
नासाश्वासो भृशं स्वेदो दुर्लभं तस्य जीवितम्॥
मन्दं किञ्चित् प्रलपति स्वेदस्नातः प्रमुह्यति।
वेपते करपादश्च प्राणास्तस्यापि दुर्लभाः॥
अतीसारेण वाऽक्रान्तो दुर्वारेण भवेद् यदि।
क्षीणः श्वसनकेनार्त्तो दक्षिणाभिमुखो हि सः॥

साध्यासाध्यलक्षणान्याह—**एकत** इति। एकतः एकस्मिन्। फुसफुसहृदये समाक्रान्ते त्वतिदुःसाध्यता। स्थिते बले इति—यदि वृथालङ्घनादिना बलक्षयो न जातस्तदैव। पादत्रये—भिषग्द्रव्याण्युपस्थातेति चिकित्सापादत्रये। दुःसाध्यतां दर्शयति—खेदो भृशमिति। आतुरो रोगी।

अथ अरिष्टलक्षणान्याह **द्वाविवेति**। द्वाविव, किंवा एकतः एकस्मिन् पार्श्वेऽपि यस्य समग्रः फुसफुसो दुष्टो न तु मूलमात्रम्। नासाश्वासः—नासापुटयोः विष्फारविशेषप्रदः श्वासः पूर्व्वोक्तरूपः। वेपते करपादमिति—हस्तपादकम्पनं किञ्चिन्मात्रचेष्टया अचेष्टया वा दृश्यमानमतिदौर्बल्यं ख्यापयति। दक्षिणाभिमुखो—यमपुरीं गन्तुमुद्यतः।

## अथ आक्षेपकज्वरः ।*

( परिचयः )

आक्षिप्यन्ते यतोऽङ्गानि सङ्कोचं यान्ति चाञ्जसा ।
घोरो ज्वरश्च संज्ञाहृत् सोऽयमाक्षेपको ज्वरः ॥

( निदानम् )

वसतां संकुले देशे रजोधूमाकुले चिरम् ।
दरिद्राणां भवेद् भूम्ना सोऽयं जीवाणुसम्भवः ॥

( सम्प्राप्तिः )

मस्तिष्कमूले परितः सुषुम्ना-
काण्डं च तच्छादिकलान्तराले ।
विषं क्रमात् पूयसमां लसीकां
संहृत्य दोषानखिलान् प्रकोप्य ।
चेष्टावहानामथ नाड़िकाना-
मुत्तेजनादाक्षिपदङ्गकानि ।
सङ्कोच्य शाखाश्च निहन्ति संज्ञा-
माक्षेपकी दुर्लभजीवितस्य ॥

---

अथापरमभिषङ्गज्वरमाह—आक्षिप्यन्ते इति । आ समन्तात् क्षिप्यन्ते सङ्कोचप्रसाराभ्यां प्रचाल्यन्ते । वस्तुतस्तु मुहुर्मुहुर्द्रुतसङ्कोचप्रसाराभ्यां अन्तराऽन्तरा स्तब्धीभावेन च या विकृतचेष्टा, तस्याः पारिभाषिकी संज्ञा 'आक्षेपक' इति । उक्तञ्च—"मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः"—इति (सु० सू० १अ०) । तत्-सहितत्वात् लक्षणया ज्वरोऽयमाक्षेपकसंज्ञः । स च विरल दृष्टोऽपीदानीं सुप्रसिद्धः । अञ्जसा झटिति । सङ्कुले बहुजनाकुले । भूम्ना प्राचुर्य्येण । क्वचिद्धनवतामपि-।

सम्प्राप्तिमाह—मस्तिष्कमूल इति द्वाभ्याम् । मस्तिष्कं नाम शिरोगुहाभ्यन्तरस्थं निखिलसंज्ञाचेष्टामूलं † यन्त्रमनेकदलप्रविभागाङ्कितं यत् सहस्रारमित्यामनन्ति तान्त्रिकाः । तस्मात् ततश्च निर्गतः सुषुम्नाकाण्डः पृष्ठ-

---

* अस्य इं० नाम—'सेरिब्रो-स्पायिनल फीवर' (Cerebro-Spinal Fever).

† इत्यस्मत् प्रत्यक्षशारीरोपोद्घातस्य ६२ पृष्ठे तत्रोद्धृतप्रमाणानि ।

रूपम्)

तीव्रा शिरोरुग् वमथुः शीतकम्पौ च जातुचित्।
ग्रीवास्तम्भः क्रमाच्छीर्षं पश्चादाकृष्यते बलात्।
ज्वरश्च वर्द्धते नित्यं शाखाः स्तब्धीभवन्ति च।
सङ्कोचं यान्ति चाङ्गानि दृष्टी यातश्च वक्रताम्।
तन्द्रा प्रलापो मोहश्च आक्षेपश्चान्तराऽन्तरा।
लक्ष्मणां श्यावरक्तानां गात्रेषु च समुद्भवः।
सर्वेन्द्रियप्रणाशश्च क्रमादाक्षेपके ज्वरे॥
एकाहान्म्रियते कश्चिद् त्र्यहाद्वा दारुणे गदे।
कश्चिच्चतुरान् वाऽथ सप्ताहान् विजहात्यसून्।
क्वचिच्चतुष्पात्-सम्पत्तौ दिष्ट्या कश्चन जीवति॥

---

वंशाभ्यन्तरस्थः। नाड्यश्च निखिलसंज्ञाचेष्टावहाः सुषुम्नाकाण्डं द्वारीकृत्य मस्तिष्काश्रयाः साक्षाद् वा मस्तिष्कप्रभवा इति शारीरबोजमत्र स्मर्त्तव्यम्। मस्तिष्कमूले मस्तिष्कस्य मूलप्रदेशे अधःप्रदेशे इति यावत्। सुषुम्नाकाण्ड परितः तत्समन्तात्। अतएव तच्छादिकलान्तराले—तच्छादिनो च एका स्थूलकला बहिःस्था स्थूलपटाकारा, अपरा तत्संलग्ना सूक्ष्मा, तयोरवकाशे। विषं जीवाणुसंघातसमुत्थम्, तद्रोगमृतकपरोक्षायां तत्रस्थलसीकादौ जीवाणुसंघातदर्शनात्। जीवाणूनां हि शोणितप्रविष्टानां सर्वदोषप्रकोपणानां तत्रैव विशेषेण विकारप्रदत्वम्। चेष्टावहानामिति। आक्षेपो हि चेष्टावहा नाड़ीराश्रित्य प्रवर्त्तमानेन वायुसंज्ञकवेगेन जन्यते, स च वेगः तादृशनाड़ीमूलानां मस्तिष्कसुषुम्नाकाण्डगतानामुत्तेजनविशेषात् प्रवर्त्तते। यत्तु प्राचां—"यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः—इति"—तत्रापि अयमेवाभिप्रायः, परं धमनीपदस्य नाड्यर्थे प्रयोगः। तदेतदखिलमस्माभिः प्रत्यक्षशारीरस्य उपोद्‌घातभागे विशदं व्याख्यातम्। इह तु दिङ्मात्रमभिधीयते।

आक्षेपकरूपमाह—**तीव्रेति**। वमथुः वमिः। जातुचिद् कदाचिद्। शीर्षं पश्चादाकृष्यते ग्रीवापृष्ठपेशीनां दृढ़सङ्कोचेन। सङ्कोचं यान्ति चाङ्गानि—

# अथ मसूरिकाज्वराः ।

मसूरिकाणां वैविध्यं पूर्वैर्यद्यपि कीर्त्तितम् ।
प्राधान्याल्लाघवाच्चेह वक्ष्यन्ते तु त्रिधैव ताः ॥
तत्राद्या बृहती नाम द्वितीया लघुनामिका ।
रोमान्तिका तृतीया च त्रिधा भिन्ना मसूरिका ॥

---

जान्वादिसङ्कोचेन कुण्डलीभूत इव तिष्ठति रोगी। दृष्टी वक्रतां यात: केकरतां व्रजत:। लक्षणामिति—अभिघातविशेषेण त्वगधो रक्तस्य सपदि स्थानीभावाद् यादृशानि भवन्ति लक्षाणि, इह प्रायस्तादृशानि लक्षाणि दृश्यन्ते सर्वगात्रेषु। विलीयन्ते च तानि स्वत एव त्रिचतुरैर्दिनैः। क्रमादिति शनैः सर्वेन्द्रियप्रणाशः। दारुणस्थले तु सद्य एव। चतुष्पात्सम्पत्तौ—"भिषग् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्"—इति शोभने पादचतुष्टये मिलिते। दिष्ट्या—तथापि भाग्येन क्वचित् कश्चिज्जीवति।

अथ विषाभिषङ्गजत्वसामान्यात् मसूरिकाज्वरानप्यागन्तुज्वरेष्वन्तर्भावय-न्नुपक्रमते—**मसूरिकाणामिति**। वैविध्यं विविधत्वम्। पूर्वैर्माधव-भाव-मिश्रादिभिराचार्य्यैः, नतु चरकसुश्रुतादिभिः प्राचीनतन्त्रकारैः। तैर्हि सूत्र-मात्रेण निर्द्देशात्। तथाहि क्षुद्ररोगाधिकारे सुश्रुतः—"दाह-ज्वर-रुजावन्त-स्ताम्राः स्फोटाः सपीतकाः। गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः।" इति (सु० नि० १३ अ०)। चरके च श्वयथुचिकित्सिते—"याः सर्वगात्रेषु मसूरमात्रा मसूरिकाः पित्तकफात् प्रदिष्टाः।" इति (च० चि० १२ अ०)। तन्त्रान्तरेऽप्युक्तं[1]—"पित्तं शोणितसंसृष्टं यदा दूषयति त्वचम्। तदा करोति पिड़काः सर्वगात्रेषु देहिनाम्। मसूरमुद्गमाषाणां तुल्याः कोलोपमा अपि। मसूरिकास्तु ता ज्ञेयाः पित्तरक्ताधिका बुधैः।"—इति। एवञ्च प्राचां समये प्रसिद्धो मसूरिकाख्यः क्षुद्ररोगः कालेन घोररोगे परिणत इति सुवचम्। आशुघ्न प्राणान्तकरी जानपदिको मसूरिका सार्द्धसहस्रवर्षेभ्यः प्राङ् नाभूदिति ऐतिहासिकाः[2]। प्राधान्यादिति—वक्ष्यमाणजातित्रये सर्वेषां मसूरिकाभेदाना-मनुप्रवेशात्। लाघवात् संख्यालघुत्वात्। इहास्मिन् ग्रन्थे।

---

१ कल्पतरुटीकाख्याताहृतोऽयं पाठः। २ एतत्प्रसङ्गविस्तरः परिशिष्टे रोगविज्ञानप्रकरणे द्रष्टव्यः।

भूवायुजलदोषादेर्भवन्त्यागन्तुहेतवः।
संक्रामिण्यो विशेषेण निदाघादौ मधौ च ताः॥
"तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरुचिर्भ्रमः।
त्वचि शोथः सवैवर्ण्यो नेत्ररागश्च प्रायशः॥"

## अथ वृहन्मसूरिका।*

( परिचयः )

मसूराकारपिड़काः सान्द्रा गात्रेषु सर्वतः।
भवन्ति पाकं गच्छन्ति लीयन्ते च द्रुतं यतः।

---

भूवायिति। प्रथमोद्भवकाले भूवायुजलदोषहेतोरवश्यस्वीकरणीयत्वात्, अन्यथा अनवस्थाप्रसङ्गः। आदिपदेन रोगिस्पर्शादिकारणं वक्ष्यमाणं गृह्यते। ननु माधवादिभिरुक्तं—"कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः। दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः। क्रूरग्रहेक्षणाच्चापि"—इत्यादि कथं संगच्छते? श्रूयताम्। कट्वम्लादिभोजनात् पित्तप्रकोपेण चेत्वं भवति, प्रदुष्टपवनोदकेभ्यस्तु विषसंक्रमः। ननु विषं तु पार्थिवमेव स्यात्, पवनोदकयोस्तु तद्वाहकतामात्रमिति चेत्? सत्यम्। अतएव मूले भूवायुजलदोषादेरित्युक्तम् †। अतएव आगन्तु-हेतवः, पूर्वोक्तहेतोस्तद्रोगिस्पर्शनादिप्रविष्टेन विषेण च मसूरिकोत्पत्ते र्बहुधादर्शनात्। संक्रामिण्यः, जनाज्जने संक्रमणशीलाः।

सर्वासां मसूरिकाणां साधारणपूर्वरूपमाह प्राचीनपद्येन—तासामिति। गात्रभङ्गः, भग्नवद् वेदना गात्रेषु। त्वचि शोथः स्तोकेनैव। सवैवर्ण्यः किञ्चिद्विशिष्टवर्णतान्वितः। कण्डूशोथवैवर्ण्यानि पूर्वरूपे बहुधा नापि दृश्यन्ते।

वृहन्मसूरिकापरिचयमाह—मसूराकारेति। मसूराकाराः समग्रमसूरसदृशाः, कदाचिद्वृहत्तराः क्षुद्रतरा वेत्युपलक्षणाद् बोध्यम्। तन्त्रान्तरे तूक्तं—

---

* इं० नाम—स्मल् पक्स् (Small Pox), बङ्गीयनाम—'बसन्त रोग' इति।

† जीवाणुकारणता च मसूरिकाणां नाद्यापि प्रमाणीकृता केनापि।

नानोपद्रवसंयुक्तो ज्वरो यत्र च दारुणः ।
बृहन्मसूरिका नाम शीतला चेति सा स्मृता ॥

( निदानं सम्प्राप्तिश्च )

वाय्वादिदोषादथवान्यरोगि-
स्पर्शादथैतत्पिड़कात्वचो वा ।
नासागलाद्यैः प्रविशद् विषं तद्
दोषानशेषान् विकरोति सद्यः ॥
ततो ज्वरः स्यादतिघोरलिङ्गो
दोषा विषं तच्च बहिः क्षिपन्ति ।
गात्रेषु जाताः पिड़कास्ततस्ताः
पक्वाः क्षयं यान्ति विषक्षयेण ॥

---

"मसूरमुद्गमाषाणां तुल्याः कोलोपमा अपि ।"—इति । कोलोपमत्वञ्च बहूनां स्फोटानां संमेलनात् क्वचिदेव । सान्द्रा घनसन्निवेशाः—इति भेदकं लिङ्गम् (दृश्यतां ३य चित्रम्) । लघुमसूरिकायान्तु प्रविरलास्ता इत्यग्रे वक्ष्यते । भवन्ति निःसरन्ति । द्रुतमित्यपि भेदकं लिङ्गं, रोमान्त्यां विलम्बेन शनैश्च पिड़कोद्गम-विलयदर्शनात् । शीतलेति संज्ञा † तु लोकप्रसिद्धा भावमिश्राचार्य्येण स्वग्रन्थे समुपनिबद्धा परं लिङ्गानि तत्रापि न्यूनानीति विस्तरकथनार्थमेष ग्रन्थः ।

निदानं संप्राप्तिश्चाह—वाय्वादीति । आदिपदेन भूजलयोर्ग्रहणम् । संक्रमणकाले वायोः प्राधान्यात्तन्मुखेन निर्देशः । हेत्वन्तरमाह—अन्यरोगिणः स्पर्शात्, तदीयपिड़कारसादिसम्पर्कात् । एतद्रोगिणः पिड़कात्वचो वा हेतोः । मसूरिकापिड़कानां प्रशोषणकाले मुक्ता यास्त्वचः, तासां विशेषेण संक्रामकत्वमिति विशेषं प्रतिपादयितुमेतदभिधानम् । दोषा वातादयः । बहिः क्षिपन्ति त्वचि निःसारयन्ति पिड़काद्वारेण । अन्यत् स्पष्टम् ।

---

† यत्तु तेन शीतलेति संज्ञा सर्वमसूरिकासाधारणी कल्पिता, तच्चिन्त्यम् । लोके बृहन्मसूरिकाया एव तत्संज्ञया प्रसिद्धेः । न चास्ति क्वापि चरकादि ग्रन्थेषु शीतलेति संज्ञा तत्पूजाद्युपदेशो वा ।

तारतम्येन दोषाणां विषस्य च बलाबलात्।
पृथग् वाऽत्यन्तसान्द्रा वा सरक्ता वा भवन्ति ताः॥

(रूपम्)

आदितः शीतकम्पाभ्यां शिरःशूलेन च ज्वरः।
प्रवर्त्तते वर्द्धते च कटीपृष्ठं रुजन् भृशम्।
ततो मोहः प्रलापश्च प्रायेणान्येऽप्युपद्रवाः॥
तृतीये तु दिने प्राप्ते ज्वरो व्रजति लाघवम्।
पिड़काश्च प्रदृश्यन्ते गम्भीरास्त्वगधः स्थिताः।
केशान्तेषु ललाटे च तथाच मणिबन्धयोः।
समुद्भूय प्रसर्पन्ति मुखेऽङ्गेषु च ताः क्रमात्॥
अथ षष्ठे तु दिवसे प्रपूर्य्यन्ते जलेन ताः।
अष्टमेऽह्नि च पूयेन वर्द्धते च ज्वरस्ततः।
शनकैर्हीयते चापि विषे प्रलघुतां गते।
प्रायशो द्वादशाहेन शुष्यन्ति पिड़काश्च ताः॥

---

वृहन्मसूरिकायाः प्रकारत्रयं वक्ष्यमाणं सम्प्राप्तिमुखेन सूचयति—**तारतम्येन** इति। दोषाणां वातादीनां तरतमभावेन, तुल्येऽपि विषे क्षेत्रवैचित्र्यादिहेतो· र्दोषकोपमात्राभेदादित्यभिप्रायः। विषस्य च बलाबलात् तीव्रबलत्वादल्प-बलत्वाद् वा हेतोः। पृथक्, असंमिलिताः। अत्यन्त सान्द्राः संमिलितप्रायाः। सरक्ताः रक्तपूर्णाः।

वृहन्मसूरिकारूपमाह—**आदित** इति। आदित आदौ। कटीपृष्ठं रुजन् पीड़यन्निति सूचकं लिङ्गं विशेषेण। अन्येऽप्युपद्रवाः, इन्द्रियनाशादयः। क्वचिन्मरणमपि दृष्टं विषाधिक्येनास्यामेव दशायाम्, तत्र मृतकपरीक्षयैव अन्तर्निर्गतानां पिड़कानां दर्शनाद्रोगनिर्णयः सम्भवति नान्यथा। तृतीये तु दिने इति प्रायिकमेतत्। क्वचित् चतुर्थेऽपि दिने पिड़कारम्भः। गम्भीरा इति गम्भीरावस्थानाः, अयमेवार्थः स्पष्टतरमुक्तस्त्वगधःस्थिता इति विशेषणेन।

विशीर्य्यन्ते च पक्षेण विसर्पाहैस्तु नैरुजम् ।
यावज्जीवं च लक्ष्माणि तिष्ठन्ति त्वचि सर्वतः ॥
विकाराः सन्निपातोक्तास्तदन्तेभाविनश्च ये ।
ते प्रायेणात्र जायन्ते श्लेष्मबाधाश्च दारुणाः ।

---

लघ्वी मसूरिका तु त्वग्गतैव । अतएव सुश्रुते "गात्रेषु वदने चान्तः" इति स्पष्टं विशिनष्टि बृहतीम् । तत्र गलादीनामन्तः क्वचिदामाशयादीनामप्यन्तः समुद्भवन्ति पिड़का इति स्मर्त्तव्यम् । अन्यत् स्पष्टम् । (दृश्यतां तृतीय-चित्रम्) ।



बृहन्मसूरिका पिड़काः । (अत्र पिड़कानां सान्द्रत्वं लक्ष्यम्)

विशीर्य्यन्ते इति । नैरुजमारोग्यम् । लक्ष्माणि चिह्नानि, लघुमसूरिकाचिह्नानि तु द्रुतं विलीयन्ते । श्लेष्मबाधाश्च दारुणाः सश्वासमार्गस्य फुस्फुसस्य आक्रमणात् । ततश्च बहुधा म्रियन्ते रोगिणः । पूर्वोक्तश्वसनकज्वरसदृशलिङ्गैरुपद्रुतस्तु मसूरिकावान् नैव जीवति ।

( प्रकारत्रयम् )

घोरे विषाभिषङ्गे तु दोषकोपात् सुदारुणात् ।
अतिमान्द्रा भवन्त्येता घोरश्चोपद्रवैर्ज्वरः ।
षष्ठाह्नात् परतस्तेन प्रायशः स विपद्यते ॥
कुथ्यन्ते क्वापि पिड़काः ज्ञेया तत्राप्यसाध्यता ॥
शोणितेऽतिप्रदुष्टे तु रक्तपित्तं प्रवर्त्तते ।
रक्तपूर्णाश्च पिड़काः प्राणास्तत्रापि दुर्लभाः ॥

( प्रसङ्गात् कृतकमसूरिका, गोमसूरिका च )

बृहन्मसूरीत्वक् चर्म्मण्युत्कीर्णा विधिपूर्वकम् ।
कतिचित् पिड़काः कृत्वा प्रतिषेधाय कल्पते ।
परं प्राणात्ययः क्वापि ततः स्यादिति केचन ।
गोमसूरीरसेनैव प्रतिषेधन्ति तं गदम् ॥

मसूरिकायाः प्राणान्तकं प्रकारत्रयं प्राह—घोरे इति । विपद्यते म्रियते स रोगी—इत्येकः प्रकारः । अत्र यदा कश्चिद् जीवति तदा चिरेण विशीर्य्यन्तेऽस्य पिड़काः । कुथ्यन्ते प्रकुथिताः शटिताः कृष्णाभा भवन्ति पिड़का—इति द्वितीयः प्रकारः । रक्तपित्तं प्रवर्त्तते मुखेन वा पायुना वा मूत्रमार्गेण वा रक्तनिःस्रवो भवति । पिड़काश्च यथाकालं जलेन पूयेन वा न पूर्य्यन्ते किन्तु रक्तेन । सोऽयं तृतीयः प्रकारः । दृश्यते च कदाचिदेषां सङ्करोऽपि ।

अथ प्रसङ्गात् प्रतिषेधविधिविषयत्वाच्च कृतकमसूरिकां गोमसूरिकाञ्चाह—बृहन्मसूरीति । बृहन्मसूरीत्वक् तत्पिड़कात्वक् । सा चेत् विधिपूर्वकं चर्म्मणि उत्कीर्णा, प्रच्छिते बाह्वादिचर्म्मणि संचूर्ण्य प्रवेशिता स्यात्, तर्हि कतिचित् पिड़काः तद्रोगसलिङ्गाः कृत्वा प्रतिषेधाय पुनराक्रमणवारणाय कल्प्यते । सेयं कृतकमसूरिका भारतीयवैद्यैराविष्कृता वर्षशतात् पूर्वं सुप्रचलिताऽपि इदानीं

वृहन्मसूरिका गोषु संक्रान्ता गोमसूरिका ।
तद्रसः प्रच्छिते चर्म्मण्यर्पितः प्रतिषेधकः ।
तत्राद्यः प्रतिषेधो यो यावज्जीवं स तिष्ठति ।
निरत्ययो भवेदन्यः प्रतिषेधस्तु नश्वरः ॥

---

विलुप्तप्राया । परमिति तत्रभाविनीं विपत्तिमाह । परं प्राणात्यय इत्यादि । स च घोररूपाणां पिड़कानां सम्भवात् । गोमसूरीरसप्रयोगविधेराविष्कारस्तु पाश्चात्यैः कृतः †। याऽसौ मानुषे वृहन्मसूरिका सैव गोषु संक्रान्ता गोमसूरिका भवति । संक्रमणञ्च तद्विषसंक्रमादित्यर्थादायाति । प्रच्छिते लेखनशस्त्रेण कृतसूक्ष्मरेखापाते गात्रचर्म्मणि तस्या गोमसूरिकाया यो रसो लसीका स चेदर्पितः प्रवेशितः, तदा प्रतिषेधकः । अतएवायं प्रतिषेधविधिः पाश्चात्यैर्बहु-परीक्षितः क्रियते राजपुरुषैरिदानीम् । स च स्वल्पलिङ्गः स्वयमेव शीघ्रं प्रशाम्यति, न च संक्रामति जनाज्जनं स्पर्शमात्रेण वृहन्मसूरिकावत् । प्रायश्च तत् पिड़कोद्गमो गात्रेषु न भवति, तथापि प्रच्छिते स्थाने पञ्चमे षष्ठे वा दिने पिड़कोद्गमस्तद्विलयश्च शनैः पक्षेण भवत्येव, तज्जन्यो ज्वरश्च स्तोकेन द्वित्रदिनस्थायी प्रायः । निरत्ययः, आद्यविधौ यथा क्वचित् प्राणहानिशङ्का नेह तथेति हेतोः । परमत्र न्यूनतामाह प्रतिषेधस्तु नश्वर इति । न चिरं तिष्ठति प्रतिषेध इति भावः । तेन द्वित्रैर्वर्षैः पुनः सोऽयं विधिरनुष्ठातव्यो भवति, अन्यथा क्व प्रतिषेधः ?

इदञ्चात्रावधेयम् । वृहन्मसूरिकोत्तीर्णस्य न भवति प्रायः पुनराक्रमणशङ्का प्रायः । तेन दशवर्षाभ्यन्तरे तस्य गोमसूरीरसादानं नावश्यकम् । कस्यचित्तु तथाविधस्य यावज्जीवं तिष्ठति प्रतिषेधशक्तिः ।

---

† "विलियम् जेनर्" नाम्ना केनचिद् आंग्लजनेन खृ० १७९६ शतके प्रवर्त्तितोऽयं विधिरिंलण्डभूमौ ।

# अथ लघुमसूरिका ।*

( परिचयः )

विरलाः कतिचिद् यस्य पिड़काः शीघ्रसम्भवाः ।
ज्वरः स्वल्पश्च तस्येयं ज्ञेया लघुमसूरिका ॥

( निदानादि )

वाय्वादेर्वा रोगिणो वा संक्रान्तं तद्विषं तनौ ।
दोषकोपं विधायाल्पं निरेति त्वचि सत्वरम् ।

अथ लघुमसूरिकामाह —विरला इति। विरलाः दूरान्तरिताः, न तु बृहन्मसूरिकावत् घनसन्निवेशाः ( दृश्यतां चतुर्थं चित्रम् ) ।



अथ निदानादि व्याचष्टे। वाय्वादेरिति। वाय्वादेर्हेतुता च परम्परयैव पूर्वोक्तनयेन। वस्तुतस्तु प्रथमोद्भवकाले क्षितिजमेव विषं स्याद्

* अस्या इं० नाम "चिकेन पोक्स्" (Chicken Pox ). वङ्गभाषा नाम—"पानबसन्त" इति ।

ततस्ताः पिडकाः स्वल्पा ज्वरः स्वल्पश्च जायते ।
शीघ्रं मुल्लाघता चापि पिडकानां प्रशोषणात् ।

( रूपम )

नातितीव्रो ज्वरः स्वल्पलिङ्गः शीघ्रं प्रमुञ्चति ।
प्रथमेऽह्नि द्वितीये वा पिडकाः सम्भवन्ति च ।
विरलाः स्वल्पसंख्याकाः चुद्रमौक्तिकसन्निभाः ।
अमध्यनिम्ना भिन्नास्तु तोयमात्रं स्रवन्ति ताः ।
पञ्चषैश्च दिनैः प्रायस्ताः प्रशुष्यन्ति सर्वतः ।
प्रायोऽष्टमेऽह्नि नैरुज्यं लक्ष्मणाञ्च द्रुतं लयः ।
क्वचिद्विषस्य बाहुल्याद् दौर्बल्याद् वाथ रोगिणः ।
कोथं गच्छन्ति पिडकाः नानारूपा भवन्ति वा ।
रक्तेन वा प्रपूर्य्यन्ते ज्वरो घोरश्च जायते ।
कृच्छ्रसाध्यानमाध्यान् वा प्रकारांस्तान् प्रचक्षते ॥

---

जीवाणुकारणता च मसूरिकाणां नाद्यापि केनापि प्रमाणीकृता, तथापि विशेषेण संक्रामकतादर्शनाद् विषाभिषङ्गत्वमनुमीयते—इत्यत्रो नाम। निरेति निर्गच्छति। न चात्र वृहन्मसूरिकावदन्तर्बहिश्च पिडकासम्भवः किन्तु त्वचि एव। अतएव त्वग्गतेयं मसूरिकेत्याहुः पूर्व्वे। तद्यथा—"तोयबुद्बुदसंकाशास्त्वग्गतास्तु मसूरिकाः। स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च" इति। अस्याश्च गम्भीरधात्ववगाहिता-विरहात् त्वग्गतेति शोभना संज्ञा।

अथ रूपमाह—नातितीव्र इति। क्वाचित्कं वैचित्र्यमाह क्वचिदिति। एवंविधस्थले वृहन्मसूरिकासाङ्कर्य्यमामनन्ति केचिद्, विषाधिक्यं दोषकोपाधिक्यं वाऽन्ये।

अत्रेदमवधेयम्। लघुमसूरिकायां तृतीयदिनाभ्यन्तरं पिडकोद्गमः, पिडकानां विरलत्वं क्षुद्रप्रायत्वं तोयपूर्णत्वञ्चादितः, अमध्यनिम्नत्वं, सत्वरप्रशोषणं, लक्ष्मणां द्रुतं लयश्चेति विशेषाः। वृहन्मसूरिकायान्तु सर्वथा तद्वैपरीत्यम्।

# अथ रोमान्तिका ।*

( परिचयः )

"रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः ।
कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्विकाः ॥"

( निदानादि )

निदानं पूर्ववत्तस्या विषं तु पृथगेव तत् ।
प्रायेणाभिभवेद् बालान् कफं पित्तञ्च कोपयेत् ।
श्वासमार्गादिषु प्रायो विकारान् व्रणशोथवत् ।
कुरुते तत् क्रमात्त्वचु निरस्तं च विलीयते ॥

---

मसूरिकायास्तृतीयां जातिमाह प्राचीनवचनेन **रोमकूपेति** । ननु रोमान्तिकायां क्षुद्रप्रमाणपिडकानां दर्शनात् कथमियं मसूरिकेति चेत् । उच्यते । पिडकोद्गम विलयादिबहुलिङ्गसादृश्यात्, प्राचां पदाङ्कानुसरणेन हि मसूरिकेय-मुच्यते । यद्यपि चरके मसूरिकाभ्यः पृथगेवाभिहिता रोमान्त्यः—यथा तत्रादौ "क्षुद्रप्रमाणाः पिडकाः शरीरे सर्वाङ्गगाः सज्वरदाहतृष्णाः । कण्डूयुताः सारुचि-सप्रसेका रोमान्तिकाः पित्तकफात् प्रदिष्टाः ।"—इति पृथगेवाभिधाय पुनरुक्तं—"याः सर्वगात्रेषु मसूरमात्रा मसूरिकाः पित्तकफात् प्रदिष्टाः"—इति ( च० चि० १२ अ० ), तथापि माधव शार्ङ्गधर-भावमिश्रादीनामाचार्याणां संवादेन वर्णनं न दोषाय; तेषामेव ग्रन्थेषु मसूरिकावर्णनविस्तरदर्शनात् । रागिण्यः ताम्राभ-रागवत्यः । पिडका इति शेषः । रोमान्त्यः, रोम्नामन्तेषु जाता इति तत्-संज्ञाः । ज्वरपूर्विका इति प्रायः पिडकोद्गमे ज्वरलाघवदर्शनात् । प्रायेणाभिभवेद् बालानित्युक्ते बालानां विशेषेण कष्टप्रदोऽयं रोगो मारकश्चेत्यभिप्रायः । श्वास-मार्गादिषु, श्वासनलिकासु फुस्फुसयोश्च । तद् विषम् । त्वचु चर्म्मसु निरस्तं निःक्षिप्तं सत् प्रविलीयते विलयं याति ।

---

* अस्या आंग्लभाषानाम—"मीज़ल्स्" (Measles) इति । वङ्गभाषानाम—"हाम्" इति ।

( रूपम् )

तवादितः प्रतिश्यायो ज्वरो रागश्च नेत्रयोः ।
तन्द्राऽरुचिः क्लमः कासो विड्भेदश्चापि कुत्रचित् ।
शोणायतानां तालौ च दर्शनं लक्ष्मणां ध्रुवम् ॥
अथ तुर्य्यात्तृतीयाद्वा दिनात्ताम्राभलक्ष्मणाम् ।
स्तोकोन्नतायतानां स्यान्मुखे गात्रेषु चोद्भवः ।
द्वित्रेश्च दिवसैस्तेषां भवेन्निःशेषसम्भवः ।
ततो ज्वरश्च लघुतां याति नो चेदुपद्रवाः ।
त्र्यहाल्लयश्च चिह्नानां तुषाभत्वग् विमोचणात् ॥
अथ चेद् रोगमध्ये वा रोगशेषेऽथवा क्वचित् ।
तद्विषं श्वासनलिकाः फुस्फुसौ च प्रसर्पति ।

---

रूपमाह—**तवादित इति ।** विड्भेदः अतीसारः, स च क्वचिदेव, मलधरायां कलायां सूक्ष्मपिडकानां निर्गमाद् विशेषेण पित्तप्रकोपाच्च । कासश्च श्वासनलिकादिषु तादृशपिडकासम्भवात् कफकोपाच्च । शोणायतानामिति च प्रथमावस्थायां विशिष्टं भेदकं लिङ्गं स्मर्त्तव्यम् । तुर्य्याच्चतुर्थात्, तृतीयाच्चतुर्थाद् वा दिनादारभ्य दिनद्वयं दिनत्रयं वा यावदुद्भवन्ति लक्ष्माणि । तानि च सूक्ष्मपिडकासंघातमयानि विषमवृत्ताद्याकाराणि यतस्ततः सम्भवन्ति । स्तोकेन उन्नतानि आयतानि विस्तृतानि चेति स्तोकोन्नतायतानि । आदौ मुखमण्डले दर्शनान्मुखे इति प्रथमतो निर्द्देशः । नो चेदुपद्रवाः—इत्युक्तेरयमभिसन्धिः । यदि फुस्फुसाक्रमणात् कासश्वासादयः प्रबलाः स्युस्तदा ज्वरः प्रबल एव तिष्ठतीति । त्र्यहाल्लयः—दिनत्रयं व्याप्य क्रमशो लयः । तुषाभत्वागिति, पिडकानां सूक्ष्मत्वात्तत्त्वचोऽपि सूक्ष्मास्तुषसदृशा भवन्ति । विशेषेण च तादृशपिडकात्वचो रोमान्तिकाविषाधारभूताः संक्रमणसाधनानि इतरमसूरिकात्वगवत् ।

अथ रोमान्तिकायां प्रायोभाविनः फुस्फुसाक्रमणस्य लिङ्गानि वर्णयति—**अथ चेदिति ।** तीव्रं हि रोमान्तिकाविषं यदि श्वासनलिकाः फुस्फुसौ च प्रसर्पति, व्रणशोथेन पीडयतीति यावत्, तदा प्रबलानि श्वासादिलिङ्गानि । तानि च

तदा श्वासश्च कासश्च ज्वरवेगश्च वर्द्धते।
मोहस्तन्द्रावसादश्च प्रायश्च प्राणसंशयः॥
म्रियन्ते च ततो बाला विशेषेण सहस्रशः।
जीवन्त्युपक्रमात् केचित् सुचिरं दुर्बलीकृताः॥
गम्भीररक्तचिह्नानां रक्तपित्तस्य चेक्षणात्।
वृत्ते रक्तातिसारे वा रोमान्त्या दुर्लभं सुखम्॥

---

## दण्डकज्वरः।*

अस्थिसन्धिरुजास्तीव्रा दण्डाहतिकृता इव।
प्रायः क्षिप्रोदयलयो वीसर्पः सर्वगात्रगः।
ज्वरश्च कण्ठरुग्युक्तः पुनरावर्त्तते गतः।
सञ्चारिणा सशोथेन सन्धिशूलेन लक्षितः॥

---

श्वसनकसन्निपातसदृशानि भूम्नाः, केवलं रक्तनिष्ठीवनं स्वेदबाहुल्यञ्च न प्रायो भवतः। उपक्रमात् चिकित्सानैपुण्यात्।

अथ रक्तपित्तोल्वणामसाध्यां रोमान्तिकामाह —गम्भीरेति। गम्भीराणि त्वचामधः संहतशोणितचिह्नप्रायाणि। रक्तपित्तस्य, ऊर्द्ध्वमधो वा प्रवृत्तस्येति शेषः। सुखमारोग्यं दुर्लभम् —इत्युक्त्या असाध्यतामतिकृच्छ्रसाध्यतां वा ख्यापयति।

अथ दण्डकाख्य ज्वरलिङ्गान्याह—अस्थिसन्धीति। दण्डाहतिर्दण्डाघात-स्तत्कृता इव रुजा अकस्मात् प्रादुर्भवन्ति। इदमेव दण्डकसंज्ञाकारणं बीजम्। वीसर्पवद् वीसर्पः ईषदुन्नत-रक्ताभ-बृहत्कोठप्रायः, स च तृतीये चतुर्थे वा दिने क्षिप्रमुदेति, लीयते च क्षिप्रं स्वत एव, क्वचित् श्यामगात्रस्य नापि दृश्यते। पुनरावर्त्तते गतः, दिनैकं दिनद्वयं वा ज्वरयित्वा मुञ्चति, त्रिचतुरैश्च दिनैः पुनरावर्त्तते ज्वरः, क्वचित् पुनरपि किञ्चिद् वीसर्पसहितः। कण्ठरुजा-सन्धिशूल-शिरःशूलादीनि च प्रायेण ज्वरसहचराणि। प्रतिश्या प्रतिश्यायो नासादिस्रावः। चिरमिति अष्टा-

---

* अस्य आंग्लभाषा नाम—( Dengue ) "डेंगु" इति।

प्रतिश्याकासवान् प्रायेणाष्टाहेन प्रमुच्यते ।
चिरं सन्धिरुजाः सन्ति स ज्ञेयो दण्डकज्वरः ॥
प्रायोऽसौ जानपदिको वातश्लेष्मप्रकोपणः ।
बालानां जरताञ्चातिदारुणः परिलक्ष्यते ॥

---

## कर्णमूलिकज्वरः ।*

एकतः कर्णमूलेऽथानुपदञ्चान्यतः पुनः ।
शोथः सरुग्ज्वरो यत्र स ज्ञेयः कर्णमूलिकः ।
पञ्चषैस्तु दिनैस्तत्र रुजाशोफौ प्रणश्यतः ।
स्याताञ्च कोषयोः प्रायो दशाहाच्च सुखम्भवेत् ॥
स प्रायो जानपदिको वातश्लेष्मकृतो ज्वरः ।
बालानामथ यूनाञ्च विशेषेण प्रवर्त्तते ॥

---

हेन । ज्वरनिर्म्मुक्तावपि स्थानात् स्थानान्तरं सञ्चरन्त्यः सन्धिरुजाश्चिराय बाधन्ते—इत्यभिसन्धिः । जानपदिको जनपदविशेषं व्याप्य युगपद् बहुषु प्रवर्त्तमानः । जरतां वृद्धानाम् । अतिदारुणः क्वचित् प्राणान्तकरोऽपि । अन्यत् स्पष्टम् ।

अथ कर्णमूलिकज्वरमाह **एकत** इति । अनुपदं दिनैकेन दिनद्वयेन वा । ननु कर्णमूलशोथः पाषाणगर्दभसंज्ञया पूर्व्वाचार्य्यैरुक्त एव—यथा 'वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः । स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः" इति ? सत्यम् । परं तत्र प्रायेण एकत एव कर्णमूले शोथो, ज्वरश्च नास्ति । इह तूभयतः शोथः सज्वरः, मुष्कादिशोथश्चानन्तरभावी प्राय इति स्फुटो विशेषः । रुजाशोफौ प्रणश्यतः, कर्णमूलयोरिति शेषः । पञ्चषैः पञ्चभिः षड्भिर्वा दिनैः । स्याताञ्चेति रुजाशोफौ पुनः कोषयोः प्रायः । कोषयोरिति सामान्याभिधानात् पुंसां मुष्कयोः, स्त्रीणां वीजकोषयोरिति बोध्यम् । स्त्रीणां वीजकोषौ च अभ्यन्तरत एव तलोदरे, तेन स्त्रीणां वंक्षणयोरूर्द्ध्वं रुजाप्रादुर्भावः । दशाहाच्चेति प्रायिकम् ।

---

* अस्य आंग्लभाषा नाम—( Mumps ) "मम्पस" इति ।

# अथ विषमज्वराः ।

"यः स्यादनियतात् कालाच्छीतोष्णाभ्यां तथैव च ।
वेगतश्चापि विषमः स ज्वरो विषमः स्मृतः ॥"

---

अथ विषमज्वराणां सामान्यलिङ्गान्याह भालुकितन्त्रवचनेन **यः स्याद्**-इति । अनियतात् कालात् अनियतकालं व्याप्य तदारभ्य वा । शीतोष्णाभ्यां शीतपूर्व्वं दाहं दाहपूर्व्वं शीतं वा कृत्वा । वेगतो विषमः कदाचित्तीव्रेण कदाचिन्मन्देन वा सन्तापादिना उपलक्षितः । इदञ्च कालादिवैषम्यं विषमज्वरसंज्ञाया वीजम् । वाग्भटोऽप्याह—"विषमो विषमारम्भ-क्रिया-कालोऽनुषङ्गवान्" इति ( अष्टाङ्ग हृ० नि० २ अ० ) । अस्य ह्ययमर्थः । आरम्भश्च क्रिया च कालश्च आरम्भक्रियाकालाः, ते विषमा यत्र स तादृशोऽनुषङ्गवान् अनुबन्धी ज्वरो विषमज्वर इति । तत्रारम्भो नाम ज्वरप्रवृत्तिः, तद्वैषम्यं दाहशीताभ्यां शीतदाहाभ्यां वा, कदाचित्तु विनैव उभाभ्याम् । क्रिया ज्वरसन्तापादि, तद्वैषम्यं कदाचित्तीव्रत्वेन कदाचिन्मन्दत्वेन । कालो द्विविधः, आक्रमणकालो भोगकालश्चेति । तत्राद्यस्य वैषम्यं यथा नियतेऽपि तृतीयादि-दिने त्वरया चिराद्वा ज्वरागमः । भोगकालस्य वैषम्यमल्पाधिककालं ज्वर-भोगेन । केचित्तु—एतानि हि प्रायिकलिङ्गानि न लक्षणम्, तत्तु मुक्तानुवन्धित्वं विषमत्वमित्याहुः । ननु तर्हि कथं सन्ततज्वरस्य विषमत्वं, श्रूयते हि—"सप्ताहं वा दशाहं वा द्वादशाहमथापि वा । सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते—इति । अतएव हि खरनादेनोक्तं—"चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः"—इति चेत्, उच्यते । तत्रापि उत्तरकाले मुक्तानु-वन्धित्वदर्शनादस्ति विषमत्वम् । उक्तञ्च—"विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्त-लक्षणः । दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते ।" इति ( च० चि० ३ अ० ) तेन सन्ततज्वरस्य विषमज्वरस्वरूपयोग्यतया विषमत्वं सुसाधम् । खरनादस्तु सुस्पष्टलिङ्गभेदप्रदर्शनाय चिकित्साभेदप्रदर्शनाय च सन्ततज्वरं विषमज्वरेभ्यो भिन्नमाहेति समाधिः ।

अथवा मुक्तानुवन्धित्वं विषमत्वमिति लक्षणमेव चिन्त्यम्, विषमज्वरेषु सर्व्वथा ज्वरमोचस्य अदर्शनात् । दृश्यमानेऽपि हि ज्वरमोचे तत्र ज्वरस्य चिराय धातुषु प्रच्छन्नतयाऽवस्थानात् । तदुक्तं सुश्रुते—"स चापि विषमो देहं न कदाचिद् विमुञ्चति । ग्लानिगौरवकार्श्येभ्यः स यस्माच प्रमुच्यते । वेगे तु समति-

